# THARKASARA

*(An easy treatise on Tharka Shastra for beginners)*

BY

P. S. Anantha Narayana Sastry.

---

PRINTERS AND PUBLISHERS:
THE MANGALODAYAM Co., LTD., TRICHUR.
COCHIN STATE.

# तर्कसारः

तर्कशास्त्रपठनं प्रारिप्सूनामुपकाराय

पुतुक्कोड्ग्रामाभिजनेन एस्. अनन्तनारायणशास्त्रिणा

संकलितः ।



---

(पुनःप्रकटनाधिकारः प्रणेतुरेव)

---

1916
1091

PRINTED AND PUBLISHED

BY

THE MANGALODAYAM CO., LLD., TRICHUR.

---

मूल्यं ६ कलाः] [PRICE 6 ANNAS.

# विषयानुक्रमः ।

# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १३ | ६ | निखिलामु | निखिलासु |
| २२ | ११ | तज्ञानमिनि | तज्ज्ञानमिति |
| २४ | ९ | शाब्दवोधस्य | शाब्दवोधस्य |
| २५ | ६ | गृह्यत | गृह्यन्त |
| ३७ | १२ | शब्देऽनित्य: | शब्दोऽनित्यः |
| ४० | ११ | पदतर्थयो: | पदतदर्थयोः |
| ४६ | १ | संबन्धेव | संबन्धेन |
| ” | १९ | लाभाद्व | लाभाद्व |
| ४९ | १५ | इयि | इति |
| ६२ | १ | समाना | सामाना |

इतोऽपि स्खलितानि सूचयत्सु कृतज्ञतां वक्ष्यामः ।

# तर्कसारः

स्वोपज्ञसंकेतपरम्पराभि-
रत्यन्तदुर्बोधतमं जनानाम् ।
तर्कं विधातुं सुगमं समेषां
संगृह्य सारं कलयामि किंचित् ॥

## उपक्रमः ।

अस्ति किल भारतीयैर्महामुनिभिश्चिरन्तनैः करुणया संकलितं दर्शनषट्कम् । सांख्ययोगौ, पूर्वोत्तरमीमांसे, न्यायवैशेषिके चेति । तेषु च तत्रभवान् गौतमो न्यायस्य प्रणेता; भगवान् कणादस्तु वैशेषिकस्य प्रतिष्ठापकः । तयोः सिद्धान्तानंशतः परिगृह्यार्वाचीना आचार्याः कमपि नवीनं ग्रन्थसमुदायमारचयन्ति स्म । य एव समुदायः साम्प्रतिकैस्तर्कशास्त्रमिति संज्ञया व्यपदिश्यते ॥

तत्र च मणिदीधितिप्रभृतयो महाप्रौढग्रन्थाः कारिकावलीप्रभृतयश्च प्रकरणग्रन्थाः काममुल्लसन्ति परस्सहस्रम् । तदपि ते शास्त्रीयसंकेतबहुला इति लौकिकानां न तेषु प्रवेशः सुललितो भवति । अतो यथाशक्ति लौकिकानां सुगमया सरण्या तर्कशा-

त्रसारं प्रतिपादयितुमेष परिश्रमो नास्थाने भविष्यतीति मे विस्रम्भः ॥

कालपरिवृत्त्या हि माणवकानामध्ययनाध्यापनक्रमावपि विपरिवर्तमानाववलोक्येते । न चेदानीन्तना महीयसा प्रयासेन समधिगम्यानि शास्त्रग्रन्थशतानि परिशीलयितुं प्रवर्तन्त इति लघुतामाधातुमेष मे प्रयत्नः ॥

शास्त्रीयभाषागहने तर्ककान्तारवर्त्मनि ।
लौकिकानां प्रवेशाय राजमार्गो वितन्यते ॥

---

## (२) शास्त्रप्रयोजनम् ।

भारतीयान्यान्यानि शास्त्राणिव तर्कशास्त्रमपि परमपुरुषार्थ*प्राप्तिमेव स्वप्रयोजनत्वेन प्रतिपादयति । सर्वविधदुःखध्वंसात्मकश्च निरुच्यते तार्किकैर्मोक्षपदार्थः । आत्मन इतरभिन्नत्वज्ञानेन जायते सर्वदुःखानामुद्ध्वंस इति ते मन्यन्ते । तादृशमितरभेदज्ञानमितरवस्तूनां ज्ञानसापेक्षमिति सकलपदार्थज्ञानं मोक्षोपयोगि संपद्यते । अतः सकलपदार्थानां लक्षणादिपुरस्कारेण ज्ञानमुत्पादयितुं तर्कशास्त्रं प्रवर्तते ॥

निरूपितानि च पदार्थजातानि सर्वाण्यपि विभजनलक्ष-

---

* मोक्ष इत्यर्थः ।

ण्यादिपुरस्कारेण तर्कग्रन्थेषु । तत्सिद्धान्तानामेव लघीयसोपाये-नावबोधनमस्य लघुपुस्तकस्य प्रयोजनम् ॥

तार्किकाश्च पदार्थतत्त्वजिज्ञासून् सर्वानपि जनान् शास्त्राध्ययनेऽधिकारित्वेन स्वयमभ्युपगच्छन्ति ; न तु तत्र वर्णाश्रमादिसंपदमपि योग्यतापादिनीमभिप्रयन्तीति किमपि तेषां कारुणिकत्वमेतत् । अतोऽत्रापि लघुनि प्रकरणे काममनुमन्यते जिज्ञासूनामखिलानामनर्गळः प्रवेशः ॥

---

## (३) पदार्थाः

---

चराचरात्मकमिदमखिलं जगत् सप्तभिः पदार्थैः संकलितमिति तर्कसिद्धान्तः । न हि तत्रानन्तर्भूतं किमपि वस्तु लोके वर्तते । ते च द्रव्यगुणकर्मसामान्यविशेषसमवायाभावसंज्ञकाः सप्त पदार्थाः* ॥

एतेषु प्रथमे षट् भावपदार्था इति चरमः पुनरभावपदार्थ इति च वक्तुं शक्यते । भावपदार्थानां प्रायशोऽनन्यसापेक्षा सत्ता विद्यते । अभावस्तु सर्वदैव वस्त्वन्तरसापेक्षः । न ह्यभाव इत्येव कश्चिदस्तीत्यस्माकमनुभवोऽस्ति । किं तु जलस्याभावः,

---

* द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।
समवायस्तथाभावः पदार्थाः सप्त कीर्तिताः ॥

(कारिकावली)

प्रकाशस्याभावः इत्यादिरीत्या यस्य कस्यापि* भाववस्तुनोऽभाव एवास्माकमनुभवगोचरो भवति ॥

भावपदार्थेषु च पृथग्जनानामनुभवाविषयाः शास्त्रवासनामात्रसंवेद्याः सन्ति कतिपये पदार्थाः । येषु प्राथम्यमर्हति विशेषनामा पदार्थः । स हि नित्येषु द्रव्येषु वर्तत इति तार्किकाः प्रतिजानन्ति ॥

द्रव्येषु तावत् पृथिवीजलादीनि, गुणेषु च रूपरसादीनि, कर्माणि सर्वाणि च पामराणामप्यनुभवविषयतामापन्नानीति सुबोधमेव तेषां स्वरूपम् ॥

सामान्यं तु सदृशप्रतीतिविषयेषु बहुषु वस्तुषु विद्यमानः साधारणो धर्मः । यथा बह्वीषु गोव्यक्तिषु विद्यमानं गोत्वं सामान्यमिति व्यपदिश्यते । एवं द्रव्यत्वं, गुणत्वं, घटत्वं, पटत्वमित्यादिकमपि सामान्यान्तर्भूतमेव ॥

यावत्स्वस्य विनाशस्तावत्कालमेव द्रव्यादिव्यक्तिं कामप्याश्रित्य वर्तमानानां गुणकर्मादीनां द्रव्यादिषु यः संबन्धः स समवाय इति कथ्यते । यथा रूपं यावदात्मविनाशं स्वोत्पत्त्यधिकरणमेव घटादिकमाश्रित्य वर्तते । न तु ततः काकादिरिव देशान्तरं गन्तुं पारयतीति तादृशां वस्तूनां संबन्धः समवाय इति

---

* यस्याभाव इति ज्ञायते स तस्य प्रतियोगीति शास्त्रकृतां संकेतः । जलाभावस्य जलं प्रतियोगि; घटाभावस्य घटः । तथा च सर्वोऽप्यभावः प्रतियोगिसापेक्ष इति फलितम् ।

निगद्यते । द्रव्येषु गुणकर्मणी समवायेन वर्तेते । एवं द्रव्यत्व-गुणत्वादिकं सामान्यं द्रव्यगुणादिषु सर्वदैव वर्तत इति तयोरपि संबन्धः समवायः । तन्तुप्रभृतिष्ववयवेषु पटादीनामवयविनां संबन्धोऽपि समवाय एवेति समवायस्वरूपम् ॥

एवमेतैः सप्तभिरेव पदार्थैः संघटितमिदं प्रपञ्चसर्वस्वमाकलयन्ति तार्किकप्रवेकाः । एषां च पदार्थानामेकैकस्य लक्षण-प्रदर्शने तन्निर्वचने च महान्तमातिष्ठन्ते प्रयाससंदोहम् ॥

---

## (४) लक्षणम् ।

---

अथ किमिदं लक्षणं नाम? अत्रोत्तरमेवमाचक्षते नैयायिकाः । दूषणत्रितयरहितो धर्मो लक्षणम् । सन्ति लक्षणदूषणानि त्रीण्यतिव्याप्त्यव्याप्त्यसंभवसंज्ञकानि । तैरकळङ्कित एव धर्मो लक्षणं भवितुमर्हति ।

तत्र तावदलक्ष्ये लक्षणस्य दर्शनेऽतिव्याप्तिर्नाम दोषः । यस्य लक्षणं विवक्षितं तल्लक्ष्यम् । तद्भिन्नमलक्ष्यम् । अतिव्याप्तेरुदाहरणं गोः शृङ्गित्वं लक्षणमित्यस्मिन् संभवति । यदि गोर्लक्षणं शृङ्गित्वमुच्येत तदातिव्याप्तिर्लक्षणदोषः पदमादधीत । शृङ्गित्वं हि लक्ष्यभूतगव*भिन्ने महिषच्छागादावपि दृश्यते ॥

---

* लक्ष्यभूतो गौः लक्ष्यभूतगवः, 'गोरतद्धितलुकि' इति टच् । तस्माद्भिन्ने इत्यर्थः

एवं लक्ष्यघटकेषु केषुचिल्लक्षणस्य सत्त्वं केषुचिदसत्त्वं च भवति चेदव्याप्तिर्लक्षणदोषः । यथा गोर्नीलरूपवत्त्वं लक्षणमुक्तं चेत्तदव्याप्तिदुष्टं भवति । नीलरूपं हि नीलास्वेव गोव्यक्तिषु विद्यते; न तु रक्तासु कपिलासु वेति कतिपयगवमात्रवृत्तितया नीलरूपमव्याप्तम् ॥

असंभवस्तु कुत्रापि लक्ष्ये लक्षणस्याविद्यमानत्वम् । यथा गोरनुत्पाटितशफवत्त्वम् । वह्नेः शीतत्वं वा ॥

एतादृशदोषत्रयरहितस्तु धर्मो लक्षणं भवति । यथा गोः सास्नावत्त्वम् । सास्ना नाम गळे लम्बमानो मांसपिण्डविशेषः । स गोष्वेव दृश्यते नान्येषु जन्तुषु । अतो न तस्यातिव्याप्तिः । अस्ति च सास्ना सर्वास्वपि गोव्यक्तिष्विति न वा तस्याव्याप्त्यसंभवौ । एतादृश एव धर्मः स्थलान्तरेष्वपि लक्षणतया व्यवह्रियत इति संक्षेपः ॥

---

## (५) द्रव्याणि ॥

द्रव्याणि तावन्नवधा विभज्यन्ते नैयायिकैः । कानि तानि? पृथिवी, जलं, तेजः, वायुः आकाशं, कालः, दिक्, आत्मा, मनश्च द्रव्याणि* । यद्यत् गन्धवदुपलभ्यते तत्सर्वं पृ-

---

* क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः । द्रव्याणि—

(कारिकावली)

थिवीति कथ्यते । अतो मनुष्यशरीरादीनामपि पृथिव्यामन्तर्भावः । जलं प्रसिद्धमेव । उष्णस्पर्शवन्ति वह्निसूर्यप्रमुखाणि तेजांसि गण्यन्ते । शब्दस्याश्रयभूतमाकाशं नाम द्रव्यमिन्द्रियागोचरोऽप्यनुमानगम्यं किमप्यस्तीत्यामनन्ति नैयायिकाः। तदेवात्राकाशमिति परिगणितम् । तच्च सर्वत्र व्याप्नोति । न तु पामरैर्व्यवह्रियमाणो नीलरूप इव चालक्ष्यमाणः कटाहाकृतिराकाशपदार्थः शास्त्रकृतामाकाशव्यपदेशभाजनम् । अस्मिन् काले इदमुत्पद्यत इति, अस्यां दिशीदं वर्तत इति च व्यवहारविषये कालदिगभिधाने वस्तुनी सर्वत्र विद्येते इति व्यवहारात्तयोः सिद्धिमभिप्रयन्ति । 'अह'मिति सर्वैरनुभूयमानो व्यवह्रियमाणश्च पदार्थ आत्मा इत्युच्यते । स च ज्ञानादीनामधिकरणं भवति । आत्मनि च न सर्वदा ज्ञानादिकं जायते । न हि सुषुप्तिकाले कोऽपि किमपि जानाति । एवंविधस्य ज्ञानानुत्पादस्य कारणं स्थलविशेषे§ मनस्सांनिध्यविरह एवेति वक्तव्यम् । अतो मनोनामकमपि द्रव्यं युक्तिभिरेव स्थापयितुं शक्यम् ॥

एषु च द्रव्येषु प्रथमानि पञ्च भूतपदेनाभिधीयन्ते । प्रथमे चत्वारो मनश्चेत्येतत्पञ्चकं मूर्तद्रव्यमिति व्यवह्रियते । आकाशकालदिगात्मानो विभवः । यः सर्वत्र व्याप्यावतिष्ठते स विभुः ॥

---

* आदिशब्देन सुखदुःखेच्छाद्वेषधर्माधर्मसंस्काराः ।

§ पुरीतन्नामकनाडीभिन्नप्रदेशे मनसा आत्मनः संयोगो ज्ञानकारणम् । सुषुप्तिदशायां मनः पुरीतति प्रविशतीत्याहुः ।

द्रव्येषु चाकाशादयः पञ्च नित्या इति तेषां सिद्धान्तः। येषामुत्पत्तिर्विनाशश्च न विद्यते ते नित्याः ॥

पृथिव्यादिचतुष्टयं त्वनित्यम्। तस्योत्पत्तिविनाशयोरनुभवेन गम्यमानत्वात्। तथापि पृथिव्यादीनामादिकारणभूताः परमाणवो नाम सूक्ष्मपदार्था उत्पत्तिविनाशरहिततया नित्या इति तार्किकैरभ्युपगतम्। प्रलयसमयेऽपि परमाणूनां नास्ति विनाशः। परमाणूनामनेकेषां संयोगवशात् स्थूलानि पृथिव्यादीन्युत्पद्यन्ते। विनाशे च तानि परमाणुं मर्यादीकृत्यैव विनश्यन्तीति संक्षेपः ॥

द्रव्याणि च गुणादीनामितरेषां षण्णामप्याश्रयभूतानीति युक्तमेव द्रव्याणां पदार्थेषु प्राथम्यम्। गुणादीनां तु न सकलपदार्थान्तराश्रयत्वम्। गुणे हि न द्रव्यं वर्तते न वा गुणो नापि वा कर्म। एवं कर्मापि न द्रव्यगुणयोराधारतां भजति। द्रव्यं तु सर्वस्यान्यस्य पदार्थजातस्याधारभूतमिति सुतरामुपपद्यते तस्य प्राथम्यम्* ॥

---

* एवमेवान्येषामपि भावपदार्थानां पूर्वं पूर्वं प्रधानमिति वक्तुं शक्यते। गुणकर्मणोर्यद्यपि द्रव्याश्रितत्वस्य सामान्याश्रयत्वस्य चाविशेषेऽपि संख्याकृतं बहुत्वमस्तीति गुणस्य प्राथम्यं सूपपादम्। किं च सर्वाणि कर्माणि कतिपयक्षणमात्रस्थायीनि; गुणास्तु चिरकालस्थायिनः कतिचन पुनर्नित्याश्चेत्यपरमिदं गुणप्राथम्ये कारणम्। सामान्यं सकलद्रव्येषु गुणकर्मणोश्च वर्तते; विशेषस्तु कतिपयद्रव्यमात्रवृत्तिरिति सामान्यस्य प्राथम्यम्। द्रव्यगुणकर्मसामान्यविशेषाः पञ्चापि संबन्धिशब्दभाजः; समवायस्तु तेषां केवलं संबन्धभूत इति तस्य चरमत्वं चेति विभावनीयम्।

## (६) गुणाः ।

गुणास्तावद्रूपादयश्चतुर्विंशति*रिति तार्किका मन्यन्ते । यच्चक्षुषा गृह्यते यच्च वर्णपदेन लोके व्यवह्रियते तच्छुक्लादिभेदभिन्नं रूपम् । रसो मधुरादिः । गन्धस्पर्शौ प्रसिद्धावेव । संख्या एकत्वद्वित्वादि. । अणुत्वं महत्त्वमित्यादि परिमाणम् । अयमस्मात्पृथगिति व्यवहारनिमित्तं पृथक्त्वं नाम गुणमपि तार्किका ऊरीकुर्वन्ति‡ । संयोगविभागौ प्रसिद्धावेव । परत्वापरत्वे पुनः क्वचि†द्दूरत्वसामीप्यरूपे भवतः । यथा मद्रपुरापेक्षया चोलमण्डलं केरलेभ्योऽपरं इति व्यवहारेऽपरत्वं सामीप्यरूपम् । चोलमण्डलापेक्षया मद्रपुरस्य केरळेभ्यः परत्वं दूरत्वातिरेकलक्षणमेव । एवं कालकृतपरत्वापरत्वे ज्येष्ठत्वकनिष्ठत्वलक्षणे संपद्येते । बुद्धिप्रभृतयः प्रयत्नान्ताः प्रसिद्धा एव ॥

---

* —अथ गुणा रूपं रसो गन्धस्ततः परम् ॥
स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम् ।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥
परिमितिः = परिमाणम् । अदृष्टं = धर्माधर्मौ ।

‡ अयं व्यवहारो भेदरूपेणान्योन्याभावेनैव निर्वहेदिति पक्षान्तरमप्यस्ति ॥

† देशकृतपरत्वापरत्वे दूरत्वसामीप्यपर्यवसायिनी ॥

2 *

पतनहेतुर्गुरुत्वम् । स्रवणहेतुर्द्रवत्वम् । विशीर्णस्य वस्त्वन्तरस्य पिण्डीभावं जनयति यो गुणः स स्नेहशब्देनोच्यते । संस्कारो नामानुभवादुत्पद्यमानः कालान्तरे स्मरणायोपकुर्वाणश्च गुणः* । स चात्मनि वर्तते । इदानीं दृश्यमानं श्रूयमाणं वा किंचन वस्तु कमपि संस्कारमात्मनि जनयति । स कालान्तरे तस्य स्मरणं प्रति सहकारी संपद्यते । अदृष्टमिति धर्माधर्मयोः साधारणी संज्ञा$ । धर्मस्यैव पुण्यमिति नामान्तरम् । अधर्मस्य पापमिति च । तत्र धर्मः शास्त्रविहितकर्मानुष्ठानेन— गङ्गास्नानादिना— जायते । अधर्मो निषिद्धकर्माचरणेन— सुरापानादिना— जायते । शब्दः प्रासिद्ध एव ॥

एवमेष गुणानां संक्षेपतः स्वभावः । सर्वे चैते द्रव्यमात्रवृत्तयः । गुणानां च द्रव्ये समवायसंबन्धेन वृत्तित्वमिति प्रस्तुतचरमेतत् ॥

एषु च गुणेषु संख्यापरिमाणपृथक्त्वसंयोगविभागाः सर्वद्रव्यवृत्तयः । परत्वापरत्वे मूर्तद्रव्येषु सकलेषु वर्तेते । न तु विभुषु । तेषां सकलदेशकालव्यापितया तत्र तद्व्यवहारासंभवात् । रूपं पृथिव्यादित्रयवृत्ति । रसः पृथिवीजलवृत्तिः‡ ।

---

* संस्कारविषये यदन्यद्वक्तव्यं तदुपरिष्टाद्वक्ष्यते ॥

$ तयोः प्रत्यक्षाविषयत्वादन्वर्था चेयम् ॥

‡ जलस्य मधुरो रस इति तार्किकाः ॥

गन्धः पृथिव्यामेव । स्पर्शः पृथिव्यादिषु चतुर्षु वर्तते । गुरुत्वं पृथिवीजलवृत्ति । द्रवत्वं पृथिवीजलतेजस्सु तिष्ठति । घृताद्यात्मके पार्थिववस्तुनि वह्निसंयोगादिना द्रवत्वोपलब्धेः पृथिव्यां द्रवत्वं स्वीक्रियते । सुवर्णं तेजस्यन्तर्भवतीति तार्किकाः सिद्धान्तयन्ति । तत्रापि वह्निसंयोगे द्रवत्वं दृश्यत इति द्रवत्वं स्वीक्रियते । परं तु तन्नैमित्तिकमिति व्यवह्रियते । जले वर्तमानं द्रवत्वं परं स्वभावसिद्धत्वात्सांसिद्धिकमुच्यते । स्नेहो जलमात्रस्य गुणः । शब्द आकाशस्य । बुद्ध्यादयः प्रयत्नान्ताः संस्कारश्चात्मवृत्तयः । गुणानां नित्यत्वानित्यत्वविवेचनमुपरि विधास्यते ॥

## (७) कर्माणि ।

चलनात्मकः सर्वोऽपि व्यापारस्तार्किकैः कर्मेति कथ्यते । तस्यावान्तरभेदा उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमना* नीति पञ्च परिगणिताः ॥

उत्क्षेपणमूर्ध्वं नयनम् । अवक्षेपणं तद्विपरीतम् । अधो नयनमिति यावत् । प्रसारणं विततनम् । आकुञ्चनं तद्विरुद्धं कर्म । गमनं प्रसिद्धमेव ॥

---

* उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥

यद्यप्येतेभ्योऽन्यानि भ्रमणस्पन्दनादीनि सुबहूनि कर्मान्तराणि सन्ति; तथापि तानि सर्वाणि गमनशब्देन गृह्यन्त इति मुनिकृतस्य विभजनस्य कथंचिदुपपत्तिः कल्पनीया* । अनयैव रीत्या किमित्युत्क्षेपणादीनां न गमनेऽन्तर्भाव इति तु न पर्यनुयोक्तुमेते वयं प्रभविष्णवः । मुनीनां स्वतन्त्रेच्छतया नियोगपर्यनुयोगानर्हत्वादिति च वदन्ति ॥

कर्मणोऽप्याधारो द्रव्यमेव। द्रव्ये कर्म समवायसंबन्धेन वर्तते । द्रव्येषु च मूर्तेष्वेव कर्माङ्गीक्रियते । न तु विभुष्वाकाशकालदिगात्मसु ॥

कर्म क्रियेति पर्यायौ । क्रियावत्त्वं मूर्तद्रव्याणां लक्षणमिति वक्तुं शक्यम् । कृधातोर्निष्पन्नोऽपि कृतिशब्दो नैयायिकैः प्रयत्नसमानार्थकतया प्रयुज्यत इति न तस्य कर्मपर्यायता ॥

क्रियैव संयोगविभागयोः कारणं संपद्यते । न हि द्वयोरन्यतरवस्तुनि क्रियां विना तयोः संयोगविभागौ जायेते। क्वचित्तु मेषद्वयघट्टनादौ द्वयोरपि क्रिया संयोगनिमित्तम् । आत्ममनःसंयोगं प्रति मनोवर्तिनी क्रियैव कारणम । विभुषु क्रियानुत्पत्त्या न विभुद्वयस्य संयोगविभागावुत्पद्येते ॥

---

* भ्रमणं रेचनं स्पन्दनोर्ध्वज्वलनमेव च ।
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥

(कारिकावली)

सर्वापि क्रिया क्षणचतुष्टयमात्रमवतिष्ठते । क्रियाणामुत्पत्तिविनाशशालित्वान्न तासां नित्यत्वमिति च तार्किकसिद्धान्तः ॥

---

## (८) सामान्यम् ।

---

समानावयवसंस्थानासु बहुषु व्यक्तिषु समानाकारप्रत्ययस्य कारणं सामान्यम् । गोव्यक्तिषु निखिलासु गोत्वात्मकं सामान्यं विद्यत इत्यत एव 'इयं गौरियं गौ'रिति समानाकारः प्रत्ययो जायते । अनुगताकारः प्रत्यय एव सामान्यस्वीकारे प्रमाणं भवति । अत एकव्यक्तिमात्रवृत्तिनामाकाशत्वादीनां न सामान्यमिति व्यपदेशः । सामान्यं जातिरिति पर्यायावेतौ ॥

तदिदं सामान्यं द्रव्यगुणकर्मसु त्रिषु समवायेन वर्तत इति तार्किकाणां राद्धान्तः । द्रव्यत्वं, गुणत्वं, कर्मत्वमित्येतेषां जातित्वं नैयायिकसंमतमेव । एवं पृथिवीत्वं, जलत्वं, तेजस्त्वमित्यादीन्यपि जातय एव ॥

जातिषु च या यदपेक्षया न्यूनव्यक्तिवृत्तिः सा तदपेक्षया अपरेत्युच्यते । या यदपेक्षया अधिकव्यक्तिवृत्तिः सा तदपेक्षया परेति च प्रोच्यते* । यथा द्रव्यत्वजातिः

---

* व्यापकत्वात्परापि स्याद् व्याप्यत्वादपरापि च । व्यापकत्वमधिकवृत्तित्वं व्याप्यत्वं न्यूनवृत्तित्वम् ।

पृथिवीत्वापेक्षया परा। सा हि पृथिवीत्वाधिकरणे पृथिव्यां सर्वत्र वर्तते; तदनाधिकरणे जलादौ च वर्तत इति तस्या अधिकव्यक्तिवृत्तिता। एवं च द्रव्यत्वजात्यपेक्षया पृथिवीत्वजातिरपरेति समायाति। तस्या न्यूनव्यक्तिवृत्तित्वात्। ययोस्तु सामानाधिकरण्यमेव नास्ति न तयोः परस्परं परत्वापरत्वव्यवहारः। यथा गुणत्वपृथिवीत्वयोः द्रव्यत्वरूपत्वयोर्वा* ॥

जातयः सर्वा अप्युत्पत्तिविनाशरहिततया नित्या इति गण्यन्ते। व्यक्तीनां विनाशेऽपि जातिरनष्टा कुत्रचिद्वर्तत एवेति विभावनीयम्। द्रव्यादित्रितयवृत्तिः सत्ता नाम कापि जातिः सर्वजात्यपेक्षया परा विद्यत इति तार्किकाणामभ्युपगमः ॥

विशेषं विषयीकृत्य यत् प्रस्तोतव्यं तदुपरिष्टात् प्रस्तोष्यते ॥

---

## (९) समवायः।

गुणादीनां द्रव्यादिषु कश्चिदस्ति संबन्ध इति काममभ्युपगन्तव्यम्। न खलु संबन्धं विना वैशिष्ट्यप्रतीति-

* इदं परत्वापरत्वं न गुणेषु गण्यत इति समवधार्यमेतत् ॥

रुत्पद्यते । अस्ति च द्रव्यादिषु गुणादिवैशिष्ट्यप्रतीतिः । अतो गुणादीनां द्रव्यादिषु संबन्धः कश्चिदभ्युपगन्तव्यः । स एव समवाय इत्युच्यते नैयायिकैः ॥

स च गुणगुणिनोः, क्रियाक्रियावतोः, अवयवावयविनोः, जातिव्यक्त्योः, विशेषनित्यद्रव्ययोश्च संबन्ध इति ते सिद्धान्तयन्ति* । एतेषां च मध्ये एकैकस्य द्वितयस्य 'अयुतासिद्धौ' इति व्यपदेशश्च भवति । यथा गुणगुणिनावयुतासिद्धौ । क्रियाक्रियवन्तौ च तथैव ॥

ययोरन्यतरत् वस्तु विनाशपर्यन्त$मपराश्रितमेव वर्तते तावयुतसिद्धौ । गुणो हि यावद्विनाशं द्रव्याश्रितमेव वर्तते । अतो द्रव्यगुणावयुतासिद्धौ । क्रियापि यावद्विनाशं द्रव्याश्रितैवावतिष्ठत इति क्रियाक्रियावतोरयुतासिद्धत्वम् । पटादिकमवयवि तन्त्वाद्यात्मकावयवमाश्रित्य यावद्विनाशं वर्तत इति तयोरयुतसिद्धता । गोत्वादिरूपा जातयो गवाद्यात्मकव्यक्त्याश्रिता एवावतिष्ठन्ते, व्यक्तिश्च यावद्विनाशं जातिमती

---

* घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।
तेषु जातेश्च संबन्धः समवायः प्रकीर्तितः ॥

घटादीनां कपालादौ = अवयवावयविनोः, तेषु = द्रव्यगुणकर्मसु । च-शब्देन विशेषनित्यद्रव्ययोः संग्रहः ॥

$ अविनाशित्वे तु सर्वदैव । आश्रितमित्यस्य संबद्धमित्येवार्थो विवक्षितः । तेन व्यक्तेर्जात्याश्रितत्वविरहेऽपि जातिसंबन्धसत्त्वादयुतासिद्धत्वोपपत्तिः ॥

वर्तत इति जातिव्यक्त्योरयुतसिद्धता । विशेषाख्यः पदार्थः सर्वदैव नित्यद्रव्येषु वर्तत इति विशेषनित्यद्रव्ययोरप्ययुतसिद्धभावः ॥

समवायश्च रूपसमवायो गन्धसमवाय इति बहुधा व्यपदिश्यमानोऽपि वस्तुत एक एवेति न तस्य नानात्वमभ्युपगम्यते नैयायिकैः । भेदव्यवहारस्तु घटाकाशमठाकाशादिव्यवहारवदुपाधिकृतत्वेन समर्थनीयः । समवाय उत्पत्तिविनाशशून्यो नित्यपदार्थ इति च तार्किकसमयः ॥

---

## (१०) अभावः ।

'ने'ति प्रतीतिविषयः कश्चिदस्ति हि पदार्थः । स तावदभाव इति नाम्ना व्यपदिश्यते । स च प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावः, अन्योन्याभाव इति चतुर्धा विभज्यते । आद्यानां त्रयाणां संसर्गाभाव इति साधारणी संज्ञा* । उत्पत्तिशालिनां वस्तूनामुत्पत्तेः पूर्वं प्रतीयमानोऽभावः प्रागभाव इत्यन्वर्थया संज्ञया व्यवह्रियते । एवं विनाशिनां पदार्थानां विनाशादनन्तरमनुभूयमानोऽभावः प्रध्वंसाभाव

---

* प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ।
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ॥

इत्यभिधीयते$ । 'अत्रेदं नास्ति' इति प्रतीतिविषयोऽभावोऽत्यन्ताभावः* । 'गौरश्वो न' 'घटः पटो न' इत्यादिप्रतीतिविषयोऽभावः अन्योन्याभावः† ॥

एषु च प्रागभावस्योत्पत्तिर्नास्ति विनाशो वर्तते । घटोत्पत्तिकाले घटप्रागभावो नश्यति किल । ध्वंसस्योत्पत्तिरस्ति विनाशो नास्ति । न हि विनष्टं वस्तु पुनरुदेति, येन ध्वंसोऽपि नाम नश्येदिति संभावना संभविनी । अत्यन्तान्योन्याभावौ तूत्पत्तिविनाशरहितौ नित्याविति व्यवह्रियेते । अभावस्य तदाश्रयेण सह स्वरूपसंबन्धाख्यः संबन्धश्च स्वीकृत इति संक्षेपः ॥

---

## (११) कार्यकारणभावः ।

कार्यस्य कारणस्य च यः परस्परं संबन्धः स एव कार्यकारणभाव इति व्यवहारेण विज्ञायते । स चायं तार्किकाणामतिकर्कशस्य निष्कर्षस्य विषयो भवति । लोके हि य-

---

$ ध्वंसो नाश इति पर्यायावेतस्य ॥

* भूतले संयोगेन घटो नास्ति, वायौ समवायेन रूपं नास्तीत्यादिप्रतीत्या सर्वोऽप्यत्यन्ताभावानुभवः संबन्धं विषयीकरोतीत्ययमंशोऽस्याभावस्यान्येभ्यो वैलक्षण्यहेतुः । अतोऽस्य संसर्गाभाव इति संज्ञा सुतरां संगच्छते च ॥

† अस्यैव 'भेद' इति संज्ञान्तरम् ॥

यज्जायते तत्सर्वं कार्यमित्युच्यते । कार्यं जन्यमिति पर्यायावेतौ । घटादिकं, स्थूलपृथिव्यादिकं च वस्तुजातं कार्यमिति कथ्यते । यस्मात् कार्यमुत्पद्यते तत् कारणम् । मृदादिकं घटादिं प्रति कारणं भवति । कारणपर्यायश्च हेतुशब्दः$ ॥

कारणेषु सन्त्यवान्तरभेदाः । यानि किल वस्तूनि सर्वमपि कार्यजातं प्रति कारणतां भजन्ति तानि साधारणकारणानीति व्यपदिश्यन्ते । ईश्वरो हि सकलस्यापि जन्यप्रपञ्चस्य कारणं भवतीति तस्य साधारणकारणत्वमामनन्ति नैयायिकाः । एवं प्राणिनामदृष्टमपि कार्यमात्रं प्रति साधारणकारणमेव ॥

यत्पुनः कार्यविशेषमेव जनयितुमलं भवति तदसाधारणकारणमित्यभिधीयते । यथा घटं प्रति मृत्तिका पटं प्रति तन्तवश्चासाधारणकारणम् । एवं कारणानां साधारण्यासाधारण्यभेदः ॥

असाधारणकारणेषु च यानि यं कंचन व्यापारं पुरस्कृत्य कार्यं जनयन्ति तानि करणानीति व्यपदिश्यन्ते । दण्डो हि चक्रभ्रमणात्मकं व्यापारं जनयन्नेव घटं प्रत्युपकरोति । अतो दण्डस्तं प्रति करणम् । भ्रमणं च तस्य व्यापारः । एवं तन्तवः संयोगद्वारा पटमुत्पादयन्तीति तेषां क-

$ निमित्तशब्दस्तु कारणविशेषवाची न तु कारणपर्याय इत्यग्रे व्यक्तीभविष्यति ॥

रणत्वं वक्तुं शक्यते । तन्तुसंयोगश्च व्यापारः । तथा च कार्यं प्रत्यव्यवहितपूर्वक्षणवृत्तितया यानि कारणानि भवन्ति तेषां व्यापारान्तरासत्त्वात्करणत्वं न संभवति । यथा तन्तुसंयोगादीनाम् । न हि तन्तुसंयोगोत्पत्त्यनन्तरं मध्ये व्यापारान्तरं पटजनकमपेक्ष्यते । अतस्तस्य करणत्वमपि नास्त्येव* ॥

---

## (१२) कारणभेदाः ।

---

अथास्त्यपरोऽपि कारणानां विभागः । यथा समवायिकारणं, असमवायिकारणं, निमित्तकारणमिति‡ ॥

यत्र कार्यकारणयोः संबन्धः समवायो भवति तत्र कारणं समवायिकारणमिति कथ्यते$ । पटं प्रति तन्तवः समवायिकारणं भवन्ति । यतः पटस्यावयविनस्तन्तूनां चावयवानां संबन्धः समवाय एव । एवं घटं प्रति मृत्तिका । एवं

---

* कार्याव्यवहितपूर्वक्षणवृत्ति कारणमेव करणमिति पक्षान्तरम् । तत्पक्षे तु तन्तुसंयोगस्यैव करणत्वम् ॥

‡ समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥

$ यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत् ।

च जन्यद्रव्यं सर्वं प्रत्यपि तदवयवः समवायिकारणमित्या-यातिं[†] ॥

द्रव्येषु समुत्पद्यमानं गुणक्रियादिकं प्रति द्रव्याणि समवायिकारणं भवन्ति । यतस्तयोरपि समवाय एव संबन्धः । हरिद्रायां सुधायाः संयोगेन शोणरूपं संजायते । तद्रूपं प्रति हरिद्रा समवायिकारणम् । आम्रफलादि द्रव्यं स्वस्मिन् जायमानं पतनादिकं प्रति च समवायिकारणमिति क्रियायामुदाहरणम् ॥

अनया च रीत्या द्रव्यगुणकर्मसु त्रिष्वपि द्रव्यमेव समवायिकारणमिति फलति । अतः समवायिकारणत्वं द्रव्याणामसाधारणो धर्म इति— द्रव्याणां लक्षणमिति --- सुवचम्[*] ॥

जन्यद्रव्यं प्रत्यवयवयोरवयवानां वा संयोगोऽसमवायिकारणम् । यथा घटं प्रति कपालद्वयस्य[$] संयोगः पटं प्रति च तन्तूनां संयोगोऽसमवायिकारणम् ॥

---

† अवयवी अवयवादत्यन्तभिन्न इति नैयायिकानां मतम । अतस्तयोः पार्थक्यमङ्गीकृत्य संबन्धादिवर्णनं नानुपपन्नम् ॥

* समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ॥

$ कपालसंज्ञितस्य वस्तुनो द्वयं संयोज्य कुलालो घटं करोतीति तार्किका मन्यन्ते । परमाणुद्वयसंयोगात् द्व्यणुकमुत्पद्यत इति त्ववयवद्वयसंयोगस्य निराक्षेपमुदाहरणम् । द्व्यणुकस्य तार्किकसंकल्पाधीनजन्मतया तत्रान्येषां संवादस्यानपेक्षणादिति कश्चित् । द्व्यणुकादिस्वरूपमुपरि व्यक्तीभविष्यति ।

समवायसंबन्धेन कार्यं यत्र निष्पद्यते तत्र समवायेनैव कारणस्यापि वर्तित्वे सत्यसमवायिकारणत्वव्यवहार इति सामान्यनियमः । पटस्तन्तुषु समवायेन संजायते, तन्तुषु तन्तुसंयोगोऽपि समवायेन वर्तत इति पूर्वोक्तोदाहरणे सामान्यनियमस्य संगतिः ॥

एवमेकस्मिन् द्रव्ये वर्तमानो गुणः क्रिया वा यदा तस्मिन्नेव वस्तुनि गुणान्तरं क्रियान्तरं वा जनयति तदा कारणीभूतयोर्गुणक्रिययोरसमवायिकारणत्वं संभवति । तत्र गुणाद् गुणान्तरोत्पत्तिरात्ममनस्संयोगादात्मनि ज्ञानोत्पत्तौ वेदितव्या । गुरुत्वाद्धेतोः फलादीनां पतनं जायत इति गुणात्क्रियोत्पत्तेरुदाहरणम् । द्रव्येषु क्रियातो विभागो भवतीति क्रियाया गुणोत्पत्तेर्निदर्शनम् । सर्वेष्वेषु दृष्टान्तेषु कारणभूतानां तत्तद्गुणक्रियाणामसमवायिकारणत्वं विज्ञेयम् ॥

प्रकारान्तरेणाप्यसमवायिकारणत्वं संभवति । अवयवगतो हि गुणोऽवयविगतं गुणं जनयतीति नैयायिकानामभ्युपगमः । तन्तूनां शुक्लतायां पटस्यापि शुक्लिमा संदृश्यते । तादृशावयवगुणस्य यत् कारणत्वं तदसमवायिकारणत्वमिति च व्यवहारः । तथा च द्रव्यं प्रत्यवयवसंयोगः, द्रव्यवृत्तिगुणकर्मणी प्रति तद्द्रव्यस्थगुणकर्मान्तरं, अवयविगुणं प्रत्यवय-

---

॥ संयोगस्य द्विष्ठतया तस्य समवायेनात्मवृत्तित्वमवसेयम् ॥

वगुणश्च कारणं भवत्यसमवायिविधयेति संक्षेपः। यथा समवायिकारणत्वं द्रव्यस्यैव भवति तथा असमवायिकारणत्वं गुणकर्मणोरेवेति नियमः* ॥

समवायिकारणादसमवायिकारणाच्च व्यतिरिक्तं कारणं निमित्तकारणमिति व्यपदिश्यते। यथा कुलालो घटस्य, तन्तुवायश्च पटस्य। एवमीश्वरः प्राणिनामदृष्टं च कार्यसामान्यं प्रति निमित्तकारणं संपद्यत इत्यादिकं स्वयमूह्यताम्। निमित्तकारणत्वं तु प्रायः सर्वेषामपि संभवतीति दिक् ॥

## (१३) कारणत्वनिर्णयः।

एकं वस्तु वस्त्वन्तरं प्रति कारणं भवतीति कथं ज्ञायत इति चेदन्वयव्यतिरेकसहचारदर्शनेन तज्ज्ञानमिति तार्किकाः प्रवदन्ति। तत्सत्त्वे तत्सत्त्वमन्वयसहचारः। यथा तन्तुतन्तुवायादिसामग्रीसत्त्वे पटसत्त्वम्। तदभावे तदभावो व्यतिरेकसहचारः। दृश्यते हि तादृशसामग्र्यभावे पटाभावश्च ॥

एवमन्वयेन व्यतिरेकेण च सहचारशालीनि कार्योत्प-

* गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥

त्तिस्थले नियमेन पूर्वकाले विद्यमानानि च वस्तूनि कारणतां भजन्ते । नियमेनेत्युक्त्या क्वचित् कार्यनिष्पत्तौ यादृच्छिकतया सहकारितामापन्नानि वस्तूनि व्युदस्यन्ते* ।

पूर्वोक्तसाहचर्यसहितान्यपि कतिचनोदासीनवस्तूनि कार्याधिकरणे कामं सत्तां लभेरन्नपरिहरणीयतया । तथा हि पटादिकार्योत्पत्तिस्थले गगनादिकमवश्यसंनिहितमेव भवति । तथापि तेषां न कारणत्वं व्यवहरन्ति प्रामाणिकाः । तादृशानां पदार्थानामन्यथासिद्ध इति शास्त्रे व्यवहारः ॥

घटोत्पत्तिस्थले दण्डादिकारणसत्त्वस्यावर्जनीयतया तेन कारणेन सह सर्वदापि संचरतां दण्डत्वदण्डरूपादीनां सत्यपि घटपूर्वभावित्वनियमे घटकारणत्वं नास्ति । अन्यथासिद्धत्वादिति च प्रामाणिकानामभ्युपगमः ॥

---

## (१४) बुद्धिभेदाः ।

---

सप्तानामपि पदार्थानां मध्ये बुद्धेः प्रपञ्चायैव महीयान् यत्न आस्थितस्तार्किकवरेण्यैः । अतस्तत्र विषये गुणान्तरापेक्षया विशेषतो वक्तव्यं सुबहु विद्यते ॥

---

* यथा कुत्रचित् स्थलविशेषे मृदानयनाद्युपयोगितया घटं प्रति जनकतां भजन्नपि रासभो न घटकारणं भवति । रासभं विनापि मृदानयनसंभवात् ॥

ज्ञानं† तावत् स्मृतिरनुभव इति द्वेधा विभज्यते । सकृद्दृष्टस्यानुमितस्य श्रुतस्य वा यत्कालान्तरे जायमानं स्मरणं घटमहं स्मरामीत्यादिप्रतीतिसिद्धं तदेव स्मृतिरित्युच्यते । स्मृतिभिन्नं ज्ञानमनुभवः ॥

अनुभवश्च घटमहं साक्षात्करोमि, वह्निमनुमिनोमि, स्वर्गं शृणोमीत्यादिरूपो बहुप्रकारः संभवति । प्रत्यक्षमनुमितिरुपमितिः शाब्दबोध इति चत्वारो जातिभेदा अनुभवस्य॥

तेषु च प्रत्यक्षस्य करणमिन्द्रियाणि; अनुमितेर्व्याप्तिज्ञानं, उपमितेः सादृश्यज्ञानं, शाब्दबोधस्य शब्दज्ञानं च । एतेषां स्वरूपमुदाहरणादिकं च क्रमशो निरूपयिष्यते ॥

---

## (१५) प्रत्यक्षम् ।

---

चक्षुरादीनां षण्णा*मिन्द्रियाणां घटादीनामर्थानां च संबन्धेन जायमानं ज्ञानं प्रत्यक्षमिति प्रोच्यते ॥

तत्र चक्षुषा त्वचा च द्रव्याणां प्रत्यक्षमुपजायते । श्रोत्रं, घ्राणं, जिह्वा च न द्रव्यग्राहकाणि । तानि पुनः श-

---

† बुद्धिर्ज्ञानं च पर्यायौ ॥

* चक्षुः श्रोत्रं घ्राणजिह्वे त्वङ्मनश्चेन्द्रियाणि षट् । ज्ञानोत्पत्तिनिमित्तत्वाज्ज्ञानेन्द्रियपदास्पदम् ॥

ब्दादीन् गुणांस्तद्गतान् जातिविशेषांश्च गृह्णन्ति । येनेन्द्रियेण यद्गृह्यते तेनैवेन्द्रियेण तन्निष्ठा जातिस्तदभावश्च गृह्यत इति नियमः । अनुभवसिद्धश्चायमर्थः । न हि रूपग्राहकाच्चक्षुषोऽन्येन केनापीन्द्रियेण नीलत्वपीतत्वादिजातिः नीलाद्यभावो वा ग्रहीतुं शक्यते । तथा च तत्तदिन्द्रियग्राह्यगुणगता जातयः तत्तद्गुणाभावश्च तदिन्द्रियमात्रेण गृह्यत इति शब्दाद्यभावोऽपि श्रोत्रादिमात्रगोचर इति फलितम् ॥

अन्तःकरणापरपर्यायं मनः पुनरात्मानमात्मवृत्तीन् प्रत्यक्षयोग्यान्* सुखदुःखादींश्च गृह्णाति । आत्मप्रत्यक्षे असाधारणकारणमन्तःकरणं प्रत्यक्षसामान्ये इत्येव न अपि तु ज्ञानसामान्ये साधारणं कारणं भवति । आत्मा मनसा संयुज्यते,† मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षमिति प्रत्यक्षजननक्रमे तार्किकप्रवादः । प्रत्यक्षज्ञाने सहकारितयावतिष्ठमान इन्द्रियस्यार्थेन संबन्धः संनिकर्ष इति व्यपदिश्यते । स च षोढा विभज्यते नैयायिकैः ॥

---

* आत्मनि प्रत्यक्षायोग्या अपि गुणा विद्यन्ते । धर्माधर्मसंस्कारा हि न कथमपि लौकिकानामिन्द्रियगोचरा भवन्ति ॥

† संयुज्यत इत्यस्य संबध्नाति इत्यर्थः । तेन यादृशविषये इन्द्रियस्यार्थेन समवायः संबन्धस्तत्रापि न नियमभङ्गः । एष च क्रमो बाह्यप्रत्यक्ष एव । आभ्यन्तरप्रत्यक्षे तु आत्मा मनसा संयुज्यते, ततः प्रत्यक्षमित्येवापेक्ष्यते ॥

4 *

## (१६) इन्द्रियार्थसंनिकर्षः ।

संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति षडिन्द्रियार्थसंनिकर्षाः प्रत्यक्षे सहकुर्वन्ति ॥

तत्र द्रव्यप्रत्यक्षे— घटादीनां बाह्यद्रव्याणामात्मनश्चाभ्यन्तरद्रव्यस्य प्रत्यक्षे— संयोगः संनिकर्षः । इन्द्रियाणामपि द्रव्यान्तर्गतत्वेन द्वयोर्द्रव्ययोः संयोगस्यैव संबन्धतासंभवात् । द्रव्यसमवेतानां गुणक्रियाजातीनां प्रत्यक्षे संयुक्तसमवायः । द्रव्यसमवेतगुणादिषु समवायेन विद्यमानानां रूपत्वनीलत्वादिधर्माणां प्रत्यक्षे संयुक्तसमवेतसमवायः ॥

श्रोत्रेण शब्दप्रत्यक्षे परं समवायः संनिकर्षः । श्रोत्रं नाम कर्णशष्कुलीदेशवर्ति आकाशमेव । आकाशस्य च शब्देन समवायः संबन्धो गुणगुणिभावात् प्राप्नोति । शब्दवृत्तिधर्माणां शब्दत्वकत्वखत्वादीनां प्रत्यक्षे च समवेतसमवायः । तदेवं चतुर्थपञ्चमसंनिकर्षौ शब्दतत्समवेतधर्मयोः प्रत्यक्षे केवलमुपकुर्वाते । न पुनरन्यत्र कुत्रापि ॥

अभावस्य प्रत्यक्षे तु विशेषणविशेष्यभावः संबन्धः । भूतले घटाभाव इति प्रत्यक्षे सत्यभावस्य विशेष्यता, भूतलं

घटाभाववदिति प्रत्यक्षे तस्य विशेषणता चेत्यवसेयम्* ॥

एते च संनिकर्षा लौकिकसंनिकर्षा इत्युच्यन्ते । एतज्जन्यं प्रत्यक्षं लौकिकप्रत्यक्षमिति च$ ।

लौकिकप्रत्यक्षज्ञाने चक्षुरादीनि इन्द्रियाण्यसाधारणकारणानि । संनिकर्षश्च तेषां व्यापारः । प्रत्यक्षज्ञानकारणानीन्द्रियाणि च क्वचित्प्रत्यक्षशब्देन व्यवह्रियन्ते ॥

---

## (१७) अनुमितिः ।

---

ज्ञातेनाज्ञातस्य वस्तुनो ज्ञानमनुमितिः । यथा पर्वते धूमं दृष्ट्वा तत्र वह्नेरपि सत्त्वं निश्चीयते सानुमितिः । एवं स्तानितं निशम्य गृहान्तःस्थितस्यापि गगने मेघप्रादुर्भावनिश्चयोऽप्यनुमितिरेव ॥

---

* द्रव्यग्रहस्तु संयोगात्, संयुक्तसमवायतः ।
द्रव्येषु समवेतानां, तथा तत्समवायतः ॥
तत्रापि समवेतानां, शब्दस्य समवायतः ।
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ॥
विशेषणतया तद्वदभावानां ग्रहो भवेत् ।

$ अलौकिकप्रत्यक्षं तु किंचिद्गहनतरमिति नात्यन्तमुपयोगीति च कृत्वा सम्प्रति संत्यज्यते ॥

सर्वास्वप्यनुमितिषु त्रीणि वस्तून्यवश्यमपेक्षितानि । पक्षः, साध्यं, हेतुरिति च तेषां नामानि । यस्मिन् वस्तुनि किंचिदस्तीत्यनुमीयते स पक्षः । यदा पर्वते वह्निरनुमीयते तदा पर्वतः पक्ष इत्युच्यते । यदपूर्वतया ज्ञायतेऽनुमानेन तत्साध्यम । पर्वतो वह्निमानित्यनुमितौ वह्निः साध्यम् । यस्य ज्ञानं साध्यानुमितिं जनयति स हेतुः । धूमेन दृष्टेन वह्नेरनुमितौ धूमो हेतुः ॥

हेतुसाध्ययोर्व्याप्तिज्ञानादनुमितिरुत्पद्यत इति तज्ज्ञानमेवानुमितौ करणं भवति । तस्य चानुमानमिति नामान्तरम् ॥

अथ का व्याप्तिः? उच्यते । हेतुसाध्ययोः साहचर्यनियम एव व्याप्तिः । यत्र यत्र हेतुर्वर्तते तत्र तत्र साध्यं वर्तत इत्यन्वयसाहचर्यमन्वयव्याप्तिरित्युच्यते । यत्र साध्यस्याभावस्तत्र हेतोरप्यभाव इति व्यतिरेकसाहचर्यं व्यतिरेकव्याप्तिः ॥

वह्निः साध्यं धूमो हेतुश्च यदि भवति तर्हीदृशं व्याप्तिद्वयमपि धूमे संघटते । अस्ति हि यत्र यत्र धूमस्तत्र तत्राग्निरिति नियमः । तथैव वह्न्यभावे धूमाभाव इति नियमश्च ॥

साध्यव्याप्तिविशिष्टो हेतुः पक्षे वर्तत इति ज्ञानम-

नुमितेः पूर्वमपेक्ष्यते । अस्य च ज्ञानस्य परामर्श इति संज्ञा* । तथा चानुमितौ व्याप्तिज्ञानं करणं, परामर्शस्त-द्व्यापार इत्यवधानम् ॥

बहुशः साहचर्यदर्शनेन वह्निधूमयोर्व्याप्तिं गृहीतवान् पुरुषो यदा पर्वते धूमं पश्यति तदा व्याप्तिस्तस्य स्मृति-पथमारोहति । तदेव व्याप्तिस्मरणं, वह्निव्याप्तिविशिष्टधूम-वान् पर्वत इति परामर्शं पुरस्कृत्यानुमितिं जनयतीति त-स्यानुमितौ करणत्वं संपद्यते$ । अनुमितेराकारस्तु पर्वतो वह्निमानित्येवमिति पूर्वं प्रस्तुतमेतत् ॥

---

## (१८) अनुमितिभेदाः ।

---

अनुमितेस्तावत् फलप्रयुक्तो भेदो द्विधा भवति । सा-ध्यनिश्चय एव ह्यनुमितेः फलम् । तच्चेत्फलं स्वयमेव व्याप्तिं गृहीत्वा हेतुदर्शनेन साध्यं निश्चिन्वानस्य संभवति तर्हि त-

---

* तादृशहेतुः पक्षे वर्तत इति ज्ञानमिव तादृशहेतुमान् पक्ष इति ज्ञानमपि परामर्शशब्दवाच्यं भवति । विशेषणविशेष्यभावव्यत्यासमन्तरेण तयोर्भेदासत्त्वात् ॥

$ एतच्च व्यापारवदसाधारणं कारणं करणमिति मतमनुसृत्योक्तम् । येषां तु कार्याव्यवहितपूर्ववृत्ति कारणं करणमित्यभ्युपगमस्तन्मते परामर्श एवानुमितौ करणम् ॥

स्यानुमितिः स्वार्थानुमितिरित्युच्यते । यत्र तु स्वयं वह्निमनुमितवतः परबुबोधयिषया वाक्यप्रयोगेण परस्यानुमितिर्जायते सा परार्थानुमितिः । तथा च स्वार्थं परार्थं चेत्यनुमानमपि द्विविधं संपद्यते । तत्र स्वार्थानुमितेरुत्पत्तिक्रमः प्रथमं प्रदर्शित एव । परार्थानुमितौ तु योऽपेक्ष्यते वाक्यप्रयोगस्तस्य स्वरूपमिदानीं निरूप्यते ॥

परार्थानुमितये प्रयुज्यमानस्य वाक्यसमूहस्य पञ्च सन्त्यवयवाः । अतः स पञ्चावयववाक्यमित्यभिधीयते । प्रतिज्ञा, हेतुः, उदाहरणं, उपनयः, निगमनं चेत्यवयवाः पञ्च ॥

पक्षः साध्यवानिति वचनं प्रतिज्ञा । 'पर्वतो वह्निमान्' इति वाक्यं प्रतिज्ञा भवति ॥

साध्यसाधकस्य हेतोः प्रतिपादनं हेतुः । एतच्च प्रायेण पञ्चम्यन्तं भवति । 'धूमवत्त्वात्' इति वाक्यं$ हेतुः ॥

हेतुसाध्ययोर्व्याप्तिप्रदर्शकं वाक्यमुदाहरणम् । "यो यो धूमवान् स वह्निमान् यथा महानसं" इत्युदाहरणवाक्यम् । उदाहरणवाक्ये व्याप्तेर्दृष्टान्तोऽप्यन्तर्भवति ॥

---

$ नैयायिकानां मते एकमपि सुबन्तं तिङन्तं वा वाक्यं भवति । वाक्यं पदसमूह इति तेषां मतम् । तन्मते अर्थबोधनसमर्थं सर्वमपि पदं भवति । न तु सुप्तिङन्तं पदमिति तेषामभ्युपगमः । तथा च प्रकृतिः प्रत्ययश्च पृथक् पदे स्यातामिति केवलसुबन्तस्यापि वाक्यत्वमव्याहतम् ॥

व्याप्तिविशिष्टहेतोः पक्षवृत्तित्वं बोधयद्वाक्यमुपनयः । 'तथा चायं' इत्युपनयस्वरूपम् । 'तथा' इत्यस्य वह्निव्याप्यधूमवानित्यर्थकतया उपनयस्य व्याप्तिविशिष्टहेतुमत्पक्षबोधकता ॥

हेतुसत्त्वात्साध्यविशिष्टः पक्ष इति प्रतिपादयद्वाक्यं निगमनम् । 'तस्मात्तथा' इति निगमनशरीरम् । वह्निव्याप्यधूमवत्त्वादयं वह्निमानिति तदर्थः ॥

एवं च, "पर्वतो वह्निमान्, धूमवत्त्वात्, यो यो धूमवान् स वह्निमान् यथा महानसं, तथा चायं, तस्मात्तथा" इति समग्रस्य पञ्चावयववाक्यस्य शरीरं संपद्यते । एतादृशवाक्यप्रयोगजन्या चानुमितिः परार्थानुमितिरिति व्यवह्रियते । अनयैव रीत्या स्थलान्तरेऽपि पञ्चावयववाक्यं स्वयं रचनीयमिति दिक् ॥

---

## (१९) हेतुभेदाः ।

---

हेतूनां तावद्व्याप्तिप्रयुक्तः प्रभेदस्त्रिविधो भवति । अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी चेति त्रिधा हेतवः ॥

येषां हेतूनामन्वयव्याप्तिर्व्यतिरेकव्याप्तिश्च भवतस्तेऽन्वयव्यतिरेकिणः । वह्नौ साध्ये धूमात्मको हेतुरन्वयव्यतिरेकी भवति । यत्र धूमस्तत्राग्निर्यथा महानसे, यत्र वह्न्यभावस्तत्र धूमाभावो यथा महाहृदे इति द्विविधाया अपि व्याप्तेस्तत्र संभवात ॥

येषां हेतूनामन्वयव्याप्तिरस्ति व्यतिरेकव्याप्तिः परं नास्ति ते केवलान्वयिनः । यथा घटो वाच्यः, ज्ञेयत्वादित्यत्र वाच्यत्वे साध्ये ज्ञेयत्वं केवलान्वयी हेतुः । तत्र हि यत्र यत्र ज्ञेयत्वं तत्र तत्र वाच्यत्वं यथा पटादौ इत्यन्वयोदाहरणं संभवति । यत्र वाच्यत्वाभावः तत्र ज्ञेयत्वाभाव इति तु न संभवति । सर्वस्यापि वस्तुजातस्य वाच्यत्वेन वाच्यत्वाभावस्य कुत्राप्यप्रसिद्धतया गगनकुसुमसोदरत्वात्* । अतस्तत्र व्यतिरेकव्याप्तिर्नास्ति ॥

येषां हेतूनां व्यतिरेकव्याप्तिरस्ति अन्वयव्याप्तिस्तु नास्ति ते केवलव्यतिरेकिणः । यथा पृथिवी जलादिसकलवस्तुभिन्ना$ गन्धवत्त्वा†दित्यत्र गन्धवत्त्वं केवलव्यतिरेकि । यत्र जलादि-

---

* वाच्यं ज्ञेयत्वादित्यत्र साध्याभाव इव हेत्वभावोऽप्यप्रसिद्धः । परं तु हेतोः केवलान्वयित्वं प्रति सर्वदा तन्नापेक्ष्यते । अतो घटो वाच्यः द्रव्यत्वादित्यादावपि साध्याभावाप्रसिद्धिमात्रेण हेतोः केवलान्वयित्वं संभवतीति विज्ञेयम् ॥

$ भिन्ना = भेदवती । तथा च भेदः साध्यम् ॥

† द्रव्यं गुणादिषट्काभिन्नं गुणवत्त्वादित्यादिकमप्युदाहरणम् ।

भेदाभावस्तत्र गन्धा‡भावः यथा जले इति व्यतिरेकव्याप्ति-स्तत्र संभवति । यत्र गन्धस्तत्र जलादिभेद इति तु न संघटते । पृथिवीव्यतिरिक्तस्य* कस्यचिद्गन्धवतो वस्तुनोऽसत्त्वाद् दृष्टान्ताभावेन तादृशव्याप्तिग्रहासंभवात् ॥

---

## (२०) पक्षसपक्षविपक्षाः ।

---

यस्मिन् वस्तुनि किंचन वस्त्वन्तरमनुमीयते तत् पक्ष-संज्ञमिति प्रागेव प्रत्यपादि । पक्षत्वं† तावद्बहुधा निरुच्यते नैयायिकैः । तत्र संदिग्धसाध्यवान् पक्ष इत्येकं निर्वचनम् । पर्वतादौ वह्न्यनुमितेः पूर्वं साध्यं संदिग्धमेवेति तस्य पक्ष-त्वोपपत्तिः ॥

एतच्च पक्षत्वं क्वचिन्न घटयितुं शक्यते । स्तनितेन मे-घानुमितौ साध्यसंदेहस्यैवानुत्पत्तेः । अतः प्रकारान्तरेण पक्षत्वं निर्वचनीयं भवति । तस्मात् सिध्यभाववान् पक्ष इति

---

‡ 'विशिष्टाद्भावप्रत्ययो विशेषणमभिधत्ते' इति न्यायेन गन्धवत्त्वं गन्ध एव ॥

* इदं पक्षव्यतिरिक्तस्यैव दृष्टान्तत्वमित्यभिप्रायेण । यदि तु पक्षैकदेशस्य घटादेर्दृष्टान्तत्वमनुमन्यते तर्ह्यत्राप्यन्वयव्याप्तिः संभवति ॥

† 'पक्षता' इति तु प्रसिद्धतरो व्यपदेशः ॥

5 *

निर्वचनं स्वीकृतम् । यत्र साध्यनिश्चयो न जातः स सिद्ध्यभाववानित्यनेन बोध्यते। तथा च स्तनितेन मेघानुमितिस्थलेऽपि अनुमितेः पूर्वं सिद्ध्यभावसत्त्वात्तत्रापि पक्षत्वं घटते ॥

कचिच्च सत्यपि प्रकारान्तरेण साध्यनिश्चये पुनरपि सत्यामनुमितीच्छायामनुमितिर्जायत इति तार्किकाणां प्रवादः* । वह्नेर्दर्शनानन्तरमपि 'धूमेन वह्निमनुमिनुयां' इतीच्छा यदि जायते तर्हि वह्न्यनुमितिरुत्पद्यत इति सिद्धान्तः । अतः सिषाधयिषा‖पि पक्षतां संपादयति । यत्र सिषाधयिषासिद्ध्यभावयोरन्यतरद्वर्तते सोऽयं पक्ष इति पर्यवसितम्$ ॥

यत्र साध्यं निश्चितं स सपक्षः । यथा वह्नौ साध्ये महानसादिः । अन्वयव्याप्तौ सपक्षो दृष्टान्तभावं भजते । यत्र धूमस्तत्राग्निर्यथा महानसे इति च तदभिलापेन स्पष्टमिदम् ॥

यत्र साध्याभावो निर्णीतः स विपक्षः । यथा वह्नौ

---

* प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः ॥

‖ सिषाधयिषा = साधयितुमिच्छा ॥

$ अनुमित्युद्देश्यत्वं पक्षत्वमित्यपि वदन्ति । पर्वतो वह्निमानित्यनुमितौ पर्वत उद्देश्यः वह्निर्विधेयः । तथा च पर्वतोद्देश्यकवह्निविधेयकानुमितिरिति तां ब्रुवन्ति ॥

साध्ये ह्रदादिः । विपक्षो व्यतिरेकव्याप्तौ दृष्टान्तः । यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा ह्रदे इति व्यतिरेकव्याप्तेरभिलापः इति च द्रष्टव्यम् ॥

अन्वयव्यतिरेकिणि हेतौ पक्षः सपक्षो विपक्ष इति त्रयोऽप्येते संभवन्ति । केवलान्वयिनि साध्याभावस्याप्रसिद्ध्या विपक्षो नास्ति; इतरौ स्तः । केवलव्यतिरेकिणि त्वनुमितेः पूर्वं साध्याप्रसिद्ध्या सपक्षो नास्ति, परौ स्त इति संक्षेपः ॥

---

## (२१) हेत्वाभासाः ।

---

व्याप्तिविशिष्टस्य हेतोः पक्षवृत्तित्वज्ञानादनुमितिरुत्पद्यत इति प्रत्यपादि किल । वस्तुतो व्याप्तिपक्षवृत्तित्वाभ्यां रहितस्यापि हेतोस्तद्वत्त्वभ्रमेण यद्यनुमितिर्जायते तर्हि सा न प्रमाणं भवति । तथाविधानुमितिजनकश्च हेतुर्हेत्वाभास इत्युच्यते । यतस्स आपातमात्रेण हेतुरिवाभासते । एतादृशा हेतवः पञ्चधा विभक्ता नैयायिकैः । अनेकान्तः,* विरुद्धः, सत्प्रतिपक्षः, असिद्धः, बाधितः इति पञ्चविधा हेत्वाभासाः । तेषां लक्षणोदाहरणे सम्प्रति विवक्ष्येते ॥

---

* अस्यैव सव्यभिचार इति नामान्तरम् ॥

तत्र प्रथमस्यानेकान्तस्य हेतोः साधारणः, असाधारणः, अनुपसंहारीति सन्ति त्रयोऽवान्तरभेदाः ॥

साध्याभाववति वस्तुनि वर्तमानो हेतुः साधारणो भवति । पर्वतो वह्निमान् ज्ञेयत्वादित्यादिकं तदुदाहरणम् । अत्र हेतुभूतं ज्ञेयत्वं --- ज्ञानविषयत्वं— वह्न्यभाववति ह्रदेऽपि वर्तत इति तस्य साधारणत्वम् ॥

सर्वेषु सपक्षेष्वविद्यमानः पक्षमात्रवृत्तिर्हेतुरसाधारणः । शब्दो नित्यः* शब्दत्वादिति तदुदाहरणम् । अत्र नित्यत्वं साध्यम् । तच्च गगनादौ निश्चितमिति गगनादयः सपक्षाः । शब्दत्वात्मको हेतुस्तेषु कुत्रापि न वर्तते । तस्य शब्दमात्रवृत्तित्वात् । अतस्तस्यासाधारणत्वम्† ॥

यस्य हेतोरन्वयदृष्टान्तो व्यतिरेकदृष्टान्तश्च नास्ति सोऽनुपसंहारी । यथा सर्वमनित्यं प्रमेयत्वात् । अत्र सर्व-

---

* तार्किकाः शब्दस्यानित्यत्वं सिद्धान्तयन्ति । अतस्तन्मते नित्यत्वसाधकहेतोर्दुष्टत्वमेवोपपादनीयम् । घटो नित्यः घटत्वादित्यादिकं तु निराक्षेपमुदाहरणम् ॥

† वस्तुतः साध्यं यत्रास्ति तत्रावृत्तित्वमेवासाधारणत्वमिति मतान्तरम् । अस्मिन् मते साध्यनिश्चयस्यानपेक्षणान्मूलोक्तमत इवासाधारणस्य कदाचिद् दोषत्वं कदाचिददोषत्वं च न संभवति । तन्मते हि शब्दोऽनित्यः शब्दत्वादिति सद्धेतावपि पक्षे साध्यसंशये सत्यसाधारण्यं स्यात् । एतन्मते तन्नास्ति ।

स्यापि पक्षत्वाद्व्याप्तिग्रहोपयोगी दृष्टान्तो न विद्यते$ । साधारणासाधारणानुपसंहारिषु त्रिष्वपि व्याप्तिज्ञानानुदयात्तद्विशिष्टहेतोः पक्षवृत्तित्वज्ञानमपि नोदेतीत्यनुमितेरनुत्पत्तिः ॥

यत्र साध्यस्य व्याप्तिर्नास्तीत्येव न, प्रत्युत साध्याभावस्य व्याप्तिरस्ति च स विरुद्धः । यथा घटो नित्यः जन्यत्वात् पटवत् । अत्र यत्र जन्यत्वं तत्र नित्यत्वमिति न संभवतीत्येव न, प्रत्युत यत्र जन्यत्वं तत्र नित्यत्वाभाव इति व्याप्तिर्वर्तते च । विरुद्धस्य साध्याभावग्राहकतया साक्षादेवानुमितिविरोधितामिच्छन्ति ॥

यस्य साध्याभावसाधकं हेत्वन्तरं* विद्यते स सत्प्रतिपक्षः । यथा शब्दो नित्यः श्रावणत्वाच्छब्दत्ववदित्युक्ते, शब्देऽनित्यः जन्यत्वाद्घटवदिति नित्यत्वाभावसाधकं हेत्वन्तरं वर्तत इति प्रथमस्य हेतोः सत्प्रतिपक्षता । अयमप्यनुमितिं साक्षादेव प्रतिबध्नाति ॥

असिद्धस्त्रिधा । आश्रयासिद्धः, स्वरूपासिद्धः, व्याप्य-

---

$ यत्र साध्यस्याभावः अप्रसिद्धः स एवानुपसंहारीति मतान्तरम् । तन्मते व्यतिरेकव्याप्तिस्तत्र नास्तीत्येतावन्मात्रेण दुष्टत्वमवगन्तव्यम् ॥

* विरुद्धे साध्यसाधकत्वेनोपन्यस्तो हेतुरेव साध्याभावस्य साधकः । सत्प्रतिपक्षे तु हेत्वन्तरमिति तयोर्भेदः ॥

त्वासिद्धश्च । यस्य पक्ष एवाप्रसिद्धः स आश्रयासिद्धः । गगनारविन्दं सुरभि अरविन्दत्वादिति तदुदाहरणम् । अत्र गगनारविन्दात्मकः पक्ष एवाप्रसिद्धः । पक्षस्यैवाप्रसिद्धौ हेतोस्तद्वृत्तित्वज्ञानं दूरापास्तमित्यमुष्य दुष्टत्वम् ॥

पक्षे हेतोरवृत्तित्वं स्वरूपासिद्धिः । शब्दो गुणः चाक्षुषत्वादित्यत्र स्वरूपासिद्धिः । न हि शब्दश्चक्षुषा गृह्यते । अतस्तस्य चाक्षुषत्वमेव नास्ति । अत्रापि हेतोः पक्षवृत्तित्वज्ञानं नोदेति ॥

व्याप्तेरभावो व्याप्यत्वासिद्धिः । पर्वतो वह्निमान् नीलधूमादित्यादिकं तदुदाहरणम् । तत्र धूमे नीलत्वांशस्याधिकस्यानावश्यकतया तद्रूपेण व्याप्यव्यापकभावो न स्वीकृतः । अत्रापि व्याप्तिज्ञानानुत्पत्त्या तद्विशिष्टहेतोः पक्षवृत्तित्वं न ग्रहीतुं शक्यम् ॥

यत्र पक्षे साध्याभावः प्रमाणान्तरेण निश्चेतुं शक्यते स बाधितः । ह्रदो वह्निमान् धूमात्, वह्निः शीतः द्रव्यत्वादित्यादिकं तदुदाहरणम् । ह्रदे वह्न्यभावः, वह्नौ शीतत्वाभावश्च प्रत्यक्षेण ग्रहीतुं शक्यत इति तत्साधने बाधितत्वम् । अत्र च साध्याभावज्ञाने सति साध्यज्ञानानुदयात्साक्षादनुमितेः प्रतिबन्धः ॥

इदं पुनरिहावगन्तव्यम् । यदेकत्र दुष्टोदाहरणे दोषा-न्तरमपि वर्तत इत्येतावता न तयोः पार्थक्यं विहन्यते । क्वचित्तेषामसंकीर्णस्योदाहरणस्य संभवश्चास्ति । अतो बाधित-स्थले पक्षे हेतुरस्ति चेदनेकान्तः, नास्ति चेत्स्वरूपासिद्ध इति बाधितस्य पृथग्गणनं किमर्थमिति नाशङ्कनीयम् । सांकर्यसं-भवेऽपि स्वरूपस्य भेदेन भेदाङ्गीकरणस्यावश्यकत्वात् । किं चासंकीर्णं बाधोदाहरणं संभवतीति च प्रदर्शयितुं शक्यम् । यथा उत्पत्तिकाले* घटो गन्धवान् पृथिवीत्वादित्यत्र व्यभि-चारस्वरूपासिद्धी न स्तः । बाधस्तु वर्तते । एवं स्थला-न्तरेष्वपि स्वयमूहनीयम् ॥

क्वचित्पुनः पञ्चाप्येते हेतुदोषाः संमिलन्ति । यथा वायुर्गन्धवान् स्नेहादित्यत्र । स्नेहस्य गन्धाभाववति जले† वर्तमानत्वाद्व्यभिचारः, स्नेहस्य गन्धाभावसाधकत्वाद्विरोधः, वायौ गन्धाभावसाधकस्य वायुत्वादेर्हेत्वन्तरस्य सत्त्वात्सत्प्र-तिपक्षता, वायौ स्नेहाभावादासिद्धिः, गन्धाभावाद्बाधश्च । ए-वमन्येषामपि पार्थक्यसांकर्यादिकं स्वयमालोच्यमिति विस्त-रभयाद्विरम्यते ॥

---

* उत्पन्नं द्रव्यं क्षणकालं निर्गुणं तिष्ठतीति तार्किकसमयः ॥

† जलवाय्वोर्गन्धोपलब्धिः पृथिवीसंपर्कात् । न तु तयोर्गन्धवत्त्वादिति ज्ञातव्यम् ॥

## (२२) उपमितिः ।

प्रत्यक्षानुमितिशाब्दबोधानामज्ञातवस्तुज्ञापकत्वं विद्यते । उपमितिस्तु नापूर्वं किंचन वस्तु विषयीकरोति । किंतु तस्याः पदशक्ति*ग्राहकत्वमेवेत्युपमितेरसाधारणं स्वरूपमेतत् ॥

व्याकरणवृद्धव्यवहारादयः सन्ति बहवः शक्तिग्रहस्योपायाः† । तेषु चान्यतममिदमुपमानं पृथक्प्रमाण$तया परिगणितं नैयायिकैः|| । उपमानं सादृश्यज्ञानमिति प्रागुक्तमास्ते । सम्प्रत्युपमित्युत्पत्तेः परिपाटीह प्रदर्श्यते ॥

अस्ति गवयादिपदानां कश्चिदर्थ इति जानन्निदन्तया

---

* अस्य पदस्यायमर्थ इति संकेतः पदशक्तिः । सा च पदतदर्थयोः संबन्धमात्रम् ॥

† शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥ विवृतेः = व्याख्यानात् । सिद्धपदस्य ज्ञातार्थकपदस्य ॥

$ प्रमायाः करणम् = प्रमाणम् । प्रत्यक्षानुमित्युपमितिशाब्दबोधाः प्रमा भवन्ति । तत्करणभूताः षडिन्द्रियानुमानोपमानशब्दाः प्रमाणानीत्युच्यन्ते ॥

|| वैशेषिकमते तूपमानस्य शब्दस्य च पृथक्प्रमाणत्वं नास्ति । तयोरनुमानेन गतार्थत्वं ते वदन्ति । सांख्ययोगयोरपि नास्त्युपमानस्य पृथक्प्रमाणत्वम् ॥

तद्जानानश्चानीक्षितपूर्वगवयो ग्रामीणः पुरुष आरण्यकस्य मुखात् 'गोसदृशो गवयः' इति वाक्यं* निशम्यावधारयति । ततो यदृच्छया कदाचित्काननं प्रविष्टस्तत्र गोसदृशं जन्तुविशेषमालोकयति । तदानीमारण्यकमुखादवधारितं वाक्यं स्मरन्नेतादृशावयवसंस्थानसहित एव जन्तुर्गवयपदवाच्य इति निश्चिनोति च । अयमेव निश्चय उपमितिरुच्यते ॥

अरण्यं गतस्य ग्रामीणस्य यत्सादृश्यदर्शनं तदुपमितौ करणम् । पूर्वावधृतवाक्यार्थस्य स्मरणं व्यापारः । गवयो‡ गवयपदवाच्य इति ज्ञानात्मिकोपमितिः फलम्$ ॥

अयं गवयपदवाच्य इति तु नोपमितेः स्वरूपं भवितुमर्हति । तथा सति तस्य गवयान्तरे तदानीं शक्तिज्ञानानुदयः प्रसज्येत । न चायमर्थोऽनुभवेन संवदतीति ॥

---

* इदं वाक्यं गोधर्मान् गवयेऽतिदिशतीत्यतोऽतिदेशवाक्यमित्युच्यते ॥

‡ विजातीयावयवसंस्थानगम्यजातिमान् व्यक्तिविशेष इत्यस्यार्थः ॥

$ ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
साद‍ृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानां तु शक्तिधीरुपमाफलम् ।

## (२३) शाब्दबोधः ।

शब्दज्ञानं शाब्दबोधे करणम् । शक्तिलक्षणाभ्यां जायमाना पदार्थोपस्थितिर्व्यापारः । परस्परान्वितविशिष्टवाक्यार्थबोधात्मकः शाब्दबोधः फलम्* ॥

अस्मात्पदादयमर्थो बोद्धव्य इति संकेतः शक्तिः । घटपदस्य कम्बुग्रीवादिमति व्यक्तिविशेषे शक्तिः । गोपदस्य सास्नालाङ्गूलादिमत्यां व्यक्तौ । शक्तिग्रहश्च व्याकरणवृद्धव्यवहारादिना जायते । यत्पदं यमर्थं शक्त्या बोधयति तत्तस्मिन् शक्तमित्युच्यते । सोऽर्थस्तस्य पदस्य शक्यः । यत्र पुनर्वक्तृतात्पर्यमनुरुध्य शक्यार्थसंबद्धः कश्चिदन्योऽर्थः प्रतीयते तत्र लक्षणा । तथा च शक्यसंबन्धो लक्षणेत्यायाति । यथा गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यप्रवाहसंबन्धिनि गङ्गातीरे लक्षणा ॥

अन्वयानुपपत्तिर्लक्षणाबीजमिति केचन वदन्ति । तत्तु न सार्वत्रिकं संभवति । गङ्गायां घोष इत्यादावाभीरपल्लीरूपस्य घोषपदार्थस्य गङ्गापदशक्ये प्रवाहे वर्तित्वासंभवेन तत्रान्वयानुपपत्तिरप्यस्तीति वक्तुं शक्यते । तथापि यष्टीः प्रवे-

---

* पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥

शयेत्यादौ दण्डानामपि प्रवेशनकर्मत्वसंभवेन दण्डधरे लक्षणा कल्प्यमाना कथङ्कारमुपपाद्यतामन्वयानुपपत्त्या? तस्मात्सर्वत्रापि तात्पर्यानुपपत्तिरेव लक्षणायां वीजम् । सा तु गङ्गायां घोष इत्याद्यन्वयानुपपत्तिस्थलेऽपि जागर्तीति तस्याः सार्वत्रिकत्वात् ॥

तात्पर्यं नाम वक्तुरिच्छा । तात्पर्यज्ञानं सर्वत्र शाब्दबोधे कारणम् । सैन्धवमानयेत्युक्ते भोजनप्रकरणे लवणस्य यात्राप्रकरणे तुरगस्य च नियतो बोधस्तात्पर्यज्ञानमन्तरेण न निर्वहति । अतस्तादृशेषु बहुषु स्थलेष्वपेक्षितं तात्पर्यज्ञानं लाघवाच्छाब्दबोधसामान्ये कारणमित्यभ्युपगमोऽपि न्याय्य एव* ॥

---

## (२४) शाब्दसहकारीणि ।

---

आसत्तिः, योग्यता, आकाङ्क्षा इत्येता अपि शाब्दबोधे सहकारितयापेक्ष्यन्ते । येषामर्थानामन्वयः— परस्परसंबन्धः— तात्पर्यविषयो भवति तद्बोधकानां पदानामव्यवधान-

---

* शक्तिलक्षणातात्पर्यादिकं मदीये वाक्यतत्त्वे विस्तरेण निरूपितमिति तत एवाधिकमनुसंधीयताम् । व्यञ्जना तु न शब्दव्यापारः, किं त्वनुमानेन लक्षणया च गतार्थेति तार्किकाणां मतम् ॥

मेवासत्तिरिति निगद्यते । असांनिध्यं च द्विधा संभवति । मध्ये पदान्तरप्रवेशादुच्चारणकालविलम्बाच्च । पदान्तरप्रवेशादासत्तिभङ्गस्योदाहरणं 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यादिकम् । गिरिरग्निमान्, भुक्तं देवदत्तेनेत्यन्वये वक्तुस्तात्पर्यम् । एवं प्रभाते 'गां' इत्युक्त्वा मध्याह्ने 'आनय' इत्युक्तेऽपि गवानयनविषयको बोधो न जायत इति कालविलम्बस्येदमुदाहरणम्* ॥

ययोरर्थयोः संबन्धो विवक्ष्यते तयोर्वस्तुतः संबन्धसत्त्वं योग्यता । योग्यताया अभावे शाब्दबोधो नोत्पद्यत इति तार्किका मन्यन्ते । यथा वह्निना सिञ्चतीत्यादौ । वह्निकरणकत्वं सेचने नास्तीति तत्र योग्यताया असत्त्वम् । तथा च 'मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः । अयं वन्ध्यासुतो याति शशशृङ्गधनुर्धरः ॥' इत्यादीनां तार्किकमते बोधकत्वमेव नास्ति । तदर्थानामप्रसिद्धतया तत्संबन्धस्य सुतरामभावात्† ॥

प्रकृतिप्रत्यययोः समभिव्याहारविशेष एवाकाङ्क्षा । घटवृत्ति कर्मत्वमिति बोधं प्रति 'घटम्' 'घटौ' 'घटान्'

---

* उच्चारणे विलम्बो व्यवधानं वा भवतु । पदार्थोपस्थिताव्व्यवधानमेव शाब्दबोधायापेक्ष्यत इति चाहुः ॥

† 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति स्वीकुर्वन्तो मतान्तरस्थाः योग्यतायाः शाब्दबोधहेतुत्वं नाभिलषन्ति ॥

इत्यादीनामेव हेतुत्वम् । न तु विपरीततया 'अम् घट' इत्याद्युच्चारणे तादृशो बोधः समुदेति । एवं घटः कर्मत्वमिति पदाभ्यां घटपदार्थकर्मत्वपदार्थयोरुपस्थितौ सत्यामपि पूर्वोक्तो बोधो न जायते । अतो घटवृत्ति कर्मत्वमिति बोधे घटपदाव्यवहितोत्तरद्वितीयाविभक्तिः कारणम । एवं स्थलान्तरेष्वप्याकाङ्क्षाया हेतुत्वं द्रष्टव्यम ॥

---

## (२५) बोधरीतिः ।

---

अथेदानीं तार्किकाणामभिमता बोधरीतिरपि किंचिदिह निबध्यते ॥

तार्किकाः सति संभवे प्रथमान्तस्यैव शाब्दबोधे प्राधान्यमभ्युपगच्छन्ति । न तु वैयाकरणा इव धात्वर्थस्य प्राधान्यम् । यत्र तु भावतिङन्तादिस्थले— रामेण स्थीयत इत्यादौ— प्रथमान्तं पदं नास्ति तत्र धात्वर्थस्य प्राधान्यमगत्या तैरङ्गीकृतम् ॥

रामो गच्छतीति वाक्याद्यादृशो बोधस्तार्किकाणामभिमतः सोऽयं विव्रियते । गम्धातोरुत्तरदेशसंयोगानुकूलव्यापारोऽर्थः । तिङः कर्तृत्वं— तच्च कृतिपर्यवसितं— अर्थः ।

व्यापारस्य जनकतासंबन्धेव कृतावन्वयः । कृतेराश्रयतासंबन्धेन रामेऽन्वयः । तिङो लट्त्वेन रूपेण वर्तमानकालोऽप्यर्थः । स च कृतावाश्रयतयान्वेति । तथा चोत्तरदेशसंयोगानुकूलव्यापारजनक,वर्तमानकालवृत्ति,कृतिमान् राम इति बोधः । व्यापारो देहचलनादिः । तज्जनिका कृतिरात्मवृत्तिः प्रयत्नः ॥

रथो गच्छतीत्यत्र तु कृतेरसंभवादाश्रयत्वे तिङो लक्षणा । उत्तरदेशसंयोगानुकूलव्यापाराश्रयो रथ इत्येव बोधः । एवं रामः करोतीत्यत्रापि कृतेर्धातुनैवाभिधानादाश्रयत्वं तिङो लक्ष्यार्थः । कृत्याश्रयो राम इति शाब्दबोधश्च ॥

रामो ग्रामं गच्छतीत्यादौ च ग्रामपदोत्तरद्वितीयाया* वर्तित्वमर्थः । तस्य धात्वर्थसंयोगेऽन्वयः । तथा च ग्रामवृत्तिसंयोगानुकूलव्यापारजनकवर्तमानकालवृत्तिकृतिमान् राम इति बोधः ॥

रामेण गम्यते ग्राम इत्यत्र कृतिजन्यत्वं तृतीयार्थः । कर्मप्रत्ययसमभिव्याहारे च धातुतो व्यापारजन्यं फलं प्रधानतया भासते । न तु फलानुकूलो व्यापारः । कर्मतिङ

---

* द्वितीयाया यद्यपि कर्मत्वमर्थः । तथापि कर्मत्वघटकानां पदार्थान्तराणामन्यतो लाभाद्वर्तित्वमेव फलितो द्वितीयार्थः ॥

आश्रयत्वमर्थः । तथा च रामकृतिजन्यव्यापारजन्यसंयोगाश्रयो ग्राम इति बोधः ॥

रामेण स्थयित इत्यादौ तु धात्वर्थस्यैव प्राधान्येन भानाद्रामकृतिजन्यो गतिनिवृत्त्यनुकूलव्यापारोऽर्थः ॥

रामो न गच्छतीत्यत्र नञोऽत्यन्ताभावोऽर्थः । तस्मिन् गमनानुकूलकृतेः प्रतियोगितयान्वयः । अभावस्याश्रयतासंबन्धेन रामेऽन्वयः । तथा च गमनजनककृत्यभाववान् राम इति बोधः ॥

घटो न पट इत्यत्र तु नञोऽन्योन्याभावोऽर्थः । तस्मिन् पटस्य प्रतियोगितयान्वयः । अन्योन्याभावस्य घटे वृत्तितयान्वयः । एवं च पटप्रतियोगिकान्योन्याभावाश्रयो घट इति बोधः ॥

क्वचिन्नञर्थस्य प्राधान्यमपि संभवति । यथा भूतले न घटः इत्यादौ । तत्र नञोऽत्यन्ताभावोऽर्थः । तस्मिन् प्रतियोगितया घटस्यान्वयः । भूतलपदोत्तरसप्तम्या वर्तित्वमर्थः । तथा च भूतलवृत्तिर्घटात्यन्ताभाव इति नञर्थप्रधानो बोध इत्यवकाशवैरल्यादिङ्मात्रं प्रदर्श्य विरम्यते ॥

---

## (२६) प्रमाभ्रमसंशयाः ।

भूतलं घटवत्, पर्वतो वह्निमान् इत्यादिषु ज्ञानेषु त्रयोंऽशा अवश्यं विषयीभवन्ति । विशेष्यं, विशेषणं,* तयोः संबन्धश्च । भूतलं घटवदिति ज्ञाने भूतलं विशेष्यं, घटो विशेषणं, संयोगः संबन्धः ॥

येन संबन्धेन यद्वस्तु यस्मिन् विशेषणतया भासते तेन संबन्धेन तद्वस्तु तत्र यदि वर्तते तर्हि तत् ज्ञानं प्रमा भवति । एवं च भूतले संयोगेन घटसत्त्वदशायां भूतलं घटवदिति ज्ञानं प्रमा भवति । तदभावदशायां तज्ज्ञानं जायमानं भ्रम इत्युच्यते ॥

येन संबन्धेन यद्वस्तु यस्मिन् विशेषणतया भासते तेन संबन्धेन तद्वस्तु तत्र नास्ति चेत्तज्ज्ञानं भ्रमः । यथा शङ्खः पीतः इति ज्ञानं भ्रमः । न हि शङ्खे भासमानं पीतरूपं तत्र वस्तुतो विद्यते ॥

पित्तादिदोषेण प्रत्यक्षं भ्रमरूपं भवति । हेत्वाभासेन जायमाना त्वनुमितिर्भ्रमरूपा । शाब्दबोधः पुनराप्तवाक्याज्जायमानः प्रमा भवति । अनाप्तवाक्यात्तु भ्रमः ।

---

* विशेषणस्य प्रकारः इति संज्ञान्तरमस्ति । तथा च भूतलं घटवदिति ज्ञानं भूतलविशेष्यकं घटप्रकारकं च भवति ॥

वैदिकं शब्दजातं सर्वमेव प्रमां जनयति। वेदस्याप्तशिखामणिनेश्वरेण प्रोक्तत्वादिति तार्किकाणां मतम्॥

प्रमाया यथार्थज्ञानमिति भ्रमस्यायथार्थज्ञानमिति च व्यपदेशान्तरं विद्यते ॥

एकस्मिन्नेव विशेष्ये यत्र भावाभावौ विशेषणतया भासेते तज्ज्ञानं संशय इत्युच्यते। भूतलं घटवद्वा न वा इति ज्ञानं संशयः। तत्र हि भूतले घटस्तदभावश्च विशेषणतया भासत इति ॥

---

## (२७) द्रव्यभेदाः ।

---

द्रव्याणां नित्यत्वानित्यत्वभेदः प्रागेव प्रतिपादितो वर्तते। इदानीमवशिष्टोऽप्यवान्तरभेदः किंचिदिह प्रस्तूयते ॥

पृथिव्यादीनां चतुर्णां द्रव्याणां परमाणवो नित्या इति तत उत्पन्नानीतराणि सर्वाण्यपि द्रव्यजातान्यनित्यानीति च प्रत्यपादि किल। अनित्यञ्च पृथिव्यादिचतुष्टयस्य शरीरमिन्द्रियं विषय इयि त्रिविधो वर्तते भेदः ॥

तत्रास्मदादीनां शरीरं पृथिवीशरीरम्* । नासाग्रे व-

---

* यद्यप्यस्माकं शरीरं पञ्चभिर्भूतैर्जनितं तथापि पृथिव्यंशस्याधिकतया पार्थिवत्वव्यपदेशः। एवं शरीरान्तराणामपि तत्तत्प्राधान्यात्तत्तद्रूपता बोध्या ॥

र्तमानं गन्धज्ञाने सहकारि घ्राणं पार्थिवमिन्द्रियम् । अन्या सर्वापि पृथिवी जीवानां भोग्यभूता विषयश्च भवति ॥

वरुणलोके विद्यमानानां देवविशेषाणां शरीरं जलशरीरमिति वदन्ति । जिह्वाग्रे वर्तमानं रसग्रहणं जनयच्चेन्द्रियं जलसंबन्धीन्द्रियम । इतरत्सर्वं जलं विषयः ॥

सूर्यलोके तैजसं शरीरम । रूपग्राहकं कनीनिकाग्रवर्ति नयनमिन्द्रियं तेजस्संबन्धि । अन्यत्तेजः सर्वं विषयः ॥

पिशाचादीनां शरीरं वायवीयम । स्पर्शग्रहणे कारणं सर्वशरीरव्यापिनी त्वग्वायुसंबन्धीन्द्रियम् । अन्यः सर्वो वायुर्विषयः । शरीरान्तर्भागे तत्र तत्र व्याप्रियमाणानां वायूनामेव प्राणापानादिसंज्ञेति न तेषां पृथग्द्रव्यत्वमाशङ्कनीयम् ॥

आकाशकालदिशामेकत्वेनावान्तरभेद एव नास्ति । वर्तमानकालादिव्यवहारः प्राचीप्रतीच्यादिव्यवहारश्च घटाकाशादिव्यवहारवदेवोपाधिकृतत्वेन समर्थनीयः ॥

आत्मा द्विधा । जीवः परश्च । जीवः प्रतिशरीरं विभिन्नो भवतीति तस्यासंख्येयत्वमेव । परमात्मा तु सर्वज्ञः सर्वशक्तः ईश्वराभिधान एक एव ॥

मनः प्रतिशरीरं भिद्यत इति तस्याप्यसंख्यत्वम् । एकस्मिन् क्षणे बहूनां वस्तूनां ज्ञानं नोदेतीत्यतो मनसोऽणुत्वं स्वीकुर्वन्ति । यदा मनो येनेन्द्रियेण संबध्नाति तदा तेन केवलं ज्ञानं जन्यते नान्येनेति ज्ञानयौगपद्यस्यासंभवः । शतावधा

नादिकरणेऽपि नैवैकस्मिन् क्षणे सकलज्ञानमुत्पद्यते । किं तु झटितितमां ज्ञानोत्पत्या कालभेदस्यानुपलम्भमात्रमिति च समाधानमुद्भावयन्ति ॥

परमाणुभ्यः पृथिव्यादीनां स्थूलवस्तूनां कथमुत्पत्तिरिति चेदित्थम् । प्राणिनामदृष्टवशेन भगवदिच्छया प्रेर्यमाणेषु परमाणुषु क्रिया संजायते । ततः परमाणुद्वयस्य संयोगे द्व्यणुकमुत्पद्यते । त्रयाणां द्व्यणुकानां संमेलनेन त्र्यणुकमुत्पद्यते । एवं चतुरणुकपञ्चाणुकादिक्रमेण स्थूला घटादयो निष्पद्यन्त इति ॥

तेषु परमाणुर्द्व्यणुकं च न प्रत्यक्षयोग्यतां विन्दते । त्र्यणुकं तु चक्षुषा ग्रहीतुं शक्येषु वस्तुषु तन्निष्ठमिति च तार्किकाणां सिद्धान्तः । गवाक्षमार्गेण प्रविशति मार्तण्डमयूखे यत्सूक्ष्मतमं रेणुशकलमुपलक्ष्यते तत्त्र्यणुकमिति संज्ञया व्यपदिश्यते । तच्च षड्भिः परमाणुभिः संघटितमिति तस्य षष्ठोंऽशः परमाणुरिति समायाति ॥

---

## (२८) गुणभेदाः* ।

गुणेषु प्रथमं रूपं शुक्लं, नीलं, पीतं, रक्तं, हरितं, कपिशं, चित्रमिति सप्तविधम् । पृथिव्यां सर्वं रूपं वर्तते । जलते-

---

* अस्मिन् प्रकरणे पूर्वमनुक्ता अवश्यवक्तव्याश्च गुणभेदाः केवलं योज्यन्ते ॥

जसोस्तु शुक्लमात्रम । जले वर्तमानमभास्वरं, तेजसि पुन-र्भास्वरं तदिति भेद: । योऽन्यं प्रकाशयति स भास्वर: ॥

रसस्तु मधुर:, अम्ल:, लवण:, कटु:, कषाय:, तिक्त इति षोढा । पृथिव्यां सर्वोऽप्यस्ति रस: । जले तु मधुरो रस इति तार्किका वदन्ति ॥

गन्ध: सुरभिरसुरभिश्चेति द्विधा । स च पृथिव्यामेव वर्तते । वस्त्वन्तरे गन्धप्रतीति: पृथिवीसंपर्कादेव जायते ॥

स्पर्श:, शीत: उष्ण: अनुष्णाशीत इति त्रिधा । शीतस्प-र्शो जले । उष्णस्तेजसि ।पृथिव्यां वायौ चानुष्णाशी-तस्पर्श:

परिमाणं चतुर्विधम् । अणुत्वं, महत्त्वं, ह्रस्वत्वं, दी-र्घत्वं चेति । इदं च सर्वेषु द्रव्येषु वर्तते । विभुषु वि-द्यमानस्य महत्त्वस्य परममहत्परिमाणमिति व्यपदेशश्च भवति ।

प्रवृत्तिर्निवृत्तिर्जीवनयोनिश्चेति यत्नस्त्रिविधो भवति । आद्यौ यथासंख्यं प्रवर्तते निवर्तते इति प्रतीतिविषयौ । श्वासो-च्छ्वासाद्युपयोगी परोक्षश्च जीवनयोनिर्नाम प्रयत्न: ॥

संस्कारास्त्रिविधो भवति । वेग:, स्थितस्थापक:, भाव-ना च । तत्र वेग: क्रियया जन्यते । स च मूर्तेषु सर्वेषु ति-ष्ठति । क्रियाशैघ्र्यं प्रति स निमित्तं संपद्यते च । अन्य-थाकृतस्य वृक्षशाखादे: पूर्वावस्थासंपादक: स्थितस्थापक: । स पृथिव्यामेव । अनुभवाज्जायमान: स्मृतिं प्रत्युपयोगी च संस्का-रो भावना । तस्याधिकरणमात्मैव ॥

यज्जन्यं तदनित्यमिति सिद्धान्ताद्गुणेषु यद्यज्जायमानं दृश्यते तत्सर्वमनित्यम् । तथा च अवयवगुणादवयविनि जन्यमानः सर्वो गुणो नश्वरः । आश्रयस्य नाशाच्च गुणानां नाशो भवति । अतोऽनित्यद्रव्याश्रितानां सर्वेषामेवाश्रयनाशेनानित्यत्वम् ॥

परमाणुषु पुनः पार्थिवेषु पाकेन रूपादिपरिवृत्तेः स्वीकारात्पार्थिवपरमाणुगतानां रूपरसगन्धस्पर्शानामनित्यत्वमेव । जलतेजोवायुपरमाणुवृत्तीनां तु रूपादीनां चतुर्णां नित्यत्वमेव । एवं तद्गतानां स्नेहद्रवत्वादीनामपि नित्यत्वम् ॥

नित्यद्रव्येषु वर्तमाना एकत्वसंख्या, परिमाणं, पृथक्त्वमित्येतानि नित्यानि । परमात्मवृत्तयो ज्ञानेच्छाकृतयो नित्याः । इतरे गुणा अनित्या इति नित्यत्वानित्यत्वविवेकः ॥

गुणेषु कतिपये विशेषगुणा इति कथ्यन्ते । यदाहुः ॥

रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः । बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः इति ॥

अत्र च बुद्ध्यादिभावनान्ता इत्यनेन बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा गृह्यन्ते । इतरे गुणाः सामान्यगुणा इति व्यवह्रियन्ते ॥

तत्तद्द्रव्यवृत्तीनां गुणानामियत्तया परिच्छेदकं प्राचां वचनमप्युपन्यस्य प्रकरणमिदमुपसंह्रियते । यथा ॥

वायोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश। दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च* ॥

## (२९) विशेषपदार्थः ।

सन्ति तार्किकैः स्वीकृतेषु पदार्थेषु कतिपये लौकिकानामगोचराः शास्त्रवासनया केवलं वेदनीयाश्च । घटस्य तद्वृत्तिरूपस्य च भिन्नतां तयोः कमपि संबन्धं च न कोऽपि लौकिकः स्वयमनुभवेन जानाति । एवं सन्त्यन्येऽप्यंशाः साधारणानामनुभवस्याविषयाः । विशिष्य चायं विशेषपदार्थः शास्त्रभावनामात्रकल्पित इति प्रागेव संसूचितम् । तमधिकृत्य यद्वक्तव्यं तदिह विवक्ष्यते ॥

---

* स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः ।
स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥
स्पर्शादयोऽष्टौ वेगश्च द्रवत्वं च गुरुत्वकम् ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।
बुध्यादिषट्क संख्यादिपञ्चकं भावना तथा ॥
धर्माधर्मौ गुणा एत आत्मनस्स्युश्चतुर्दश ।
संख्यादिपञ्चकं कालदिशोः, शब्दश्च ते च खे ॥
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।
परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे । इति तद्विवरणम् । अत्र च 'अथ गुणा रूपं' इत्यादिगुणप्रकरणयोजितकारिकामनुसृत्य गणनं करणीयम् ॥

घटादिद्रव्याणां परस्परं भेदः यद्यनुमित्स्यते तदा तदवयवभेदेनैवानुमातुं शक्यते । एवं क्रमशः सूक्ष्मद्रव्येष्ववतरणे एतत्त्र्यणुकं तस्मात्त्र्यणुकात् भिद्यते एतद्व्यणुकसमारब्धत्वात् ,एतद्व्यणुकं तद्व्यणुकात् भिद्यते एतत्परमाणुसमारब्धत्वादित्यन्तमनुमानपरम्परा प्रसरति । तत्र परमाणूनां भेदस्यानिश्चये एतत्परमाणुस्तत्परमाणुरिति व्यवहारस्यैवानुदयेन कथं नाम तत्समारब्धत्वं हेतूकृत्य द्व्यणुकभेदः साध्यताम् । कथं वा तदुपरितनानुमानानां प्रामाण्यं च जायताम् । अतः परमाणूनां परस्परं भेदकः कश्चन धर्म आवश्यकः । तस्यैव विशेष इति नाम कल्पितम् ।।

स च प्रत्येकं परमाणुषु भिन्नाभिन्नः स्वीक्रियते । तस्य पुनरेतत्परमाणुवृत्तेस्तत्परमाणुवृत्तित्वं भवति वा न वेति न शङ्कनीयम् । यतः स स्वीक्रियमाणः सन्नेव प्रत्येकवृत्तितया भिन्नाभिन्नतया च स्वीकृतः । स चायं विशेषो न केवलं परमाणुषु किं त्वन्येष्वपि नित्यद्रव्येषु— आत्ममनःप्रभृतिषु— वर्तते । नित्यद्रव्याणामसंख्येयतया विशेषाणामप्यसंख्येयत्वमिति च विशेषमङ्गीकुर्वतां सिद्धान्तसरणिः ।।

विशेषाणां स्वत एव यथा परस्परं भेदः स्वीक्रियते तथा नित्यद्रव्याणामेव भवत्विति विशेषं गलहस्तयन्तो नवीनाः शिष्येषु करुणामिवात्मनो युक्तिवश्यतामपि विशदयन्तीत्यलमनया काकदन्तपरीक्षया ।।

---

## (३०) साधर्म्यम् ।

अयमप्येकः प्रकारः पदार्थव्युत्पादनस्य, यत्तेषां साधर्म्यस्य कथनं नाम । बहुषु वस्तुषु समानतया विद्यमानस्तादितरेष्वविद्यमानश्च धर्मः साधर्म्यमिति निगद्यते । यथा द्रव्याणां नवानां गुणवत्त्वं साधर्म्यम् । गुणवत्त्वं नवसु द्रव्येषु वर्तते न चान्यस्मिन् वर्तत इति । एवं बहुषु स्थलेषु साधर्म्यं प्रदर्शयितुं शक्यते । तस्यापि लेशोऽत्र समुदाह्रियते ॥

द्रव्यगुणकर्मणां त्रयाणां सत्तावत्त्वं साधर्म्यम् । सत्ता नाम काचन जातिर्द्रव्यादिषु त्रिषु वर्तत इति तार्किकैरङ्गीकृतत्वात् । सापि पृथग्जनानामनुभवस्याविषय एव । अस्ति सन् इत्यादिप्रतीतेः सत्तारहितेष्वपि दर्शनेन सत्तायामनुभवाभावात् ॥

गुणादीनां षण्णां गुणशून्यत्वं क्रियाशून्यत्वं च साधर्म्यम् । द्रव्याणां समवायिकारणत्वं साधर्म्यम् ॥

सर्वेष्वपि भूतपदवाच्येषु बहिरिन्द्रियेण गृह्यमाणः कश्चन विशेषगुणो वर्तत इति बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं तेषां साधर्म्यम् । पृथिव्यां गन्धादेः, जले रसादेः, तेजसि रूपादेः, वायौ स्पर्शस्य, गगने शब्दस्य च तत्तद्बहिरिन्द्रियगृह्यमाणस्य सत्त्वात्साधर्म्यमिदं संगच्छते ॥

मूर्तद्रव्याणां पञ्चानां क्रियावत्त्वं, परत्वापरत्वे, वेगवत्त्वं चेति साधर्म्याणि। पृथिव्यादीनां चतुर्णां स्पर्शवत्त्वं, त्रयाणां रूपवत्त्वं, पृथिवीजलयोर्द्वयो रसवत्त्वं च समानो धर्मः। एवं वस्त्वन्तराणामपि साधर्म्यं स्वयमूहनीयम्॥

इदमपीहाकलनीयम्। यद्यो धर्मो येषां समानो धर्म इत्युक्तः स तदितरेषां वैधर्म्यं* च भवति। यथा गुणवत्त्वं द्रव्याणां साधर्म्यमुक्तं, तदेव गुणादीनां वैधर्म्यं भवति। वैधर्म्यं विरुद्धो धर्मः। अविद्यमानो धर्म इति यावत्। सप्तानामपि पदार्थानां समानधर्मतया व्यवह्रियमाणा ज्ञानविषयत्वादयस्तु न कस्यापि वैधर्म्यं भवन्ति। तदितरस्य कस्यचिदभावादिति संक्षेपः॥

---

## (३१) संकेतविवृतिः।

---

धर्मस्य धर्मिणश्च पार्थक्येन मनस्याकलनं तर्कशास्त्रस्य जीवितसर्वस्वमिति वक्तव्यं भवति। तयोः पार्थक्यमवबोधयितुं बहुतरः प्रयासस्तार्किकैराश्रितश्चास्ति। बहूनि तार्किकाणां निर्वचनानि पूर्वपक्षसिद्धान्तजालानि च धर्मधर्मिविवेकं विना काममशक्यावबोधान्येव। अतस्तत्र प्रत्येकमवधातव्यं जिज्ञासुभिस्तर्कतत्त्वस्य॥

---

* यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत्॥

8

तार्किकाः किल लक्ष्ये लक्ष्यतां, हेतौ हेतुतां, साध्ये साध्यतां च तत्तद्धर्मिव्यतिरिक्तां वदन्ति। यदा पृथिवी लक्ष्या भवति तदा पृथिव्यां लक्ष्यता नाम धर्मो विद्यते । धूमे हेतौ हेतुता नाम कश्चन धर्मोऽस्ति । एवं साध्ये वह्नौ साध्यता नाम कश्चिदस्ति धर्मः । एतेषां च धर्माणां किंचिद्धर्मान्तरमवच्छेदकमिति तेषां संकेतः ॥

अवच्छेदको धर्मः प्रायेण अवच्छेद्यस्य नियामक इव भवति । अवच्छेदकधर्मो यत्र वर्तते तत्रैवावच्छेद्यस्यापि स्थितिः संभवतीति तस्य नियामकत्वमथवा परिचायकत्वं वक्तुं शक्यते । पृथिव्यां वर्तमानाया लक्ष्यताया अवच्छेदकं पृथिवीत्वम् । धूमे विद्यमानाया हेतुताया धूमत्वमवच्छेदकम् । पृथिवीत्वेनावच्छिद्यमाना लक्ष्यता 'पृथिवीत्वावच्छिन्ना' इति कथ्यते । एवं धूमस्था हेतुता धूमत्वावच्छिन्ना ॥

अवच्छेद्यापेक्षया न्यूनवृत्तित्वमधिकवृत्तित्वं वावच्छेदकधर्मस्य नानुमन्यते । अतः पृथिवीवृत्तेर्लक्ष्यताया न्यूनवृत्ति घटत्वं अधिकवृत्ति द्रव्यत्वं वा नावच्छेदकं भवति । एतादृशावच्छेदकधर्माणां बहुधा निर्वचनोपयोगित्वं च संभवति । तस्यैकमुदाहरणं प्रदर्श्यते । घटाभावः, घटत्वावच्छिन्नप्रतियोगिताकाभावश्च भिन्नौ भवतः । घटाभावो नाम घटप्रतियोगिकोऽभावः । कस्यचन घटस्य केवलं प्रतियोगिता तत्रापेक्ष्यते । घटत्वावच्छिन्नप्रतियोगिताकाभावे तु प्रतियोगिता स-

वंघटवृत्तिर्भवति । अन्यथा घटत्वस्य तदवच्छेदकत्वमेव न निर्वहेत् । तथा च यस्य कस्यापि घटस्यासत्त्वमात्रेण घटाभाववानिति व्यवहारो जायते । सर्वस्यापि घटस्य— घटसामान्यस्य— असत्त्व एव घटत्वावच्छिन्नप्रतियोगिताकाभावस्य व्यवहारः । 'घटो नास्ति' इति ज्ञाने चास्यैव विषयत्वमिति न यत्किञ्चिद्घटाभाववति तादृशप्रतीतेरुत्पत्तिः । एवं स्थलान्तरेषु स्वयमूह्यताम् ॥

हेतुतासाध्यताप्रतियोगितादीनां* यथैव कश्चिद्धर्मोऽवच्छेदको भवति तथा कश्चन संबन्धोऽप्यवच्छेदकः परिगण्यते । संयोगसंबन्धेन धूमस्य वह्न्यनुमितौ हेतुभावे सति हेतुता संयोगसंबन्धावच्छिन्ना । एवं येन संबन्धेन साध्यस्य पक्षवृत्तित्वमनुमीयते तदवच्छिन्ना साध्यता । संयोगेन घटो नास्तीति व्यवहारविषयस्याभावस्य प्रतियोगिता संयोगसंबन्धावच्छिन्ना । संबन्धस्याप्यवच्छेदकत्वस्वीकारेण 'संयोगेन घटो नास्ति' 'समवायेन घटो नास्ति' इति प्रतीतिविषययोरभावयोः पार्थक्यं निर्वहति ॥

एवंविधेषु च हेतुताप्रभृतिषु धर्मेषु यौ द्वौ परस्परं संबन्धिनौ भवतस्तयोः संबन्धस्य निरूप्यनिरूपकभाव इति संज्ञा कृता । कार्यता कारणता, आधारता आधेयता,

---

* आदिना कार्यता, विषयता, विशेष्यता, प्रकारताप्रभृतयो ग्राह्याः ॥

प्रतियोगिता अनुयोगिता, विशेष्यता विशेषणता इत्यादिकस्यैकैकस्य द्विकस्य मिथःसंबन्धो निरूप्यनिरूपकभाव इति निगद्यते । तथा च तन्तुनिष्ठकारणतायाः पटनिष्ठकार्यतायाश्च निरूप्यनिरूपकभावः संबन्धः । अतस्तन्तुनिष्ठकारणतानिरूपितकार्यतावान् पट इति शास्त्रे व्यवहारः । भूतले घटस्य विद्यमानतायां भूतलनिष्ठाधारतानिरूपिताधेयतावान् घटो भवति । घटस्याभाव इति व्यवहारे घटनिष्ठप्रतियोगितानिरूपितानुयोगितावान अभावो भवति । भूतलं घटवदिति ज्ञाने भूतलवृत्तिविशेष्यतानिरूपिताविशेषणतावान् भवति घटः । एवं प्रातिलोम्येन पटनिष्ठकार्यतानिरूपितकारणतावान् तन्तुरित्यादिव्यवहारोऽपि संभवतीत्यवधेयम् ॥

निरूप्यनिरूपकभावस्य वस्तुभेदकत्वमप्युदाह्रियते । शुक्तिरजतयोरिमे शुक्तिरजते इति ज्ञानस्य शुक्तिरजतयोरिमे रजतशुक्ती इति ज्ञानस्य* च परस्परं भेदः निरूप्यनिरूपकभावभेदादेवोपपादनीयः । प्रथमज्ञाने शुक्तित्ववन्निष्ठविशेष्यतानिरूपितशुक्तित्वनिष्ठविशेषणता रजतत्ववन्निष्ठविशेष्यतानिरूपितरजतत्वनिष्ठविशेषणता च स्तः । द्वितीयस्मिंस्तु शुक्तित्ववन्नि-

---

* इमे शुक्तिरजते रजतशुक्ती इति च ज्ञानमिदंत्वावच्छिन्नविशेष्यतानिरूपितशुक्तित्वरजतत्वप्रकारताविशिष्टं, तत्र प्रथमज्ञाने वस्तुतः शुक्तित्वविशेष्ये शुक्तित्वं रजतत्वविशेष्ये रजतत्वं चास्ति द्वितीयस्मिन् स नास्तीति च द्योतयितुं 'शुक्तिरजतयो'रिति सप्तम्यन्तस्य द्विः प्रयोगः । न तु ज्ञाने सोंऽशोऽन्तर्भवति ॥

ष्ठविशेष्यतानिरूपिता विशेषणता न शुक्तित्वे किं तु रजतत्वे, रजतत्ववन्निष्ठविशेष्यतानिरूपिता विशेषणता च न रजतत्वे किं तु शुक्तित्वे इति पूर्वस्माद्भेदः । अन्यथा द्वयोरपि ज्ञानयोः शुक्तिरजते विशेष्ये शुक्तित्वरजतत्वे च विशेषणे इत्यभेद एवापद्येत ॥

ययोर्वस्तुनोरेकस्मिन्नधिकरणे वर्तित्वं भवति ते समानाधिकरणे इत्युच्येते । गन्धः पृथिवीत्वं च पृथिव्यां वर्तेते इति ते समानाधिकरणे । ये वस्तुनी नैकस्मिन्नधिकरणे वर्तेते ते व्यधिकरणे । गन्धो जलत्वं च व्यधिकरणे । प्रतियोगी अभावश्च प्रायशो व्यधिकरणावेव भवतः । न हि घटवति घटाभावो विद्यते । क्वचित्तु प्रतियोग्यभावौ समानाधिकरणौ संभवतः । एकस्मिन्नेव वृक्षे शाखायां कपिसंयोगो मूले कपिसंयोगाभावश्च वर्तते । एवं यस्य वस्तुनोऽभावेन सह सामानाधिकरण्यं भवति तद्वस्तु 'अव्याप्यवृत्ति' इति व्यपदिश्यते । संयोगः सर्वोऽप्यव्याप्यवृत्तिः । आत्मनि शरीरान्तर्भागे ज्ञानमुत्पद्यते न घटाद्यन्तर्भाग इति ज्ञानमव्याप्यवृत्ति । वृक्षे शाखायां कपिसंयोगो न मूले इत्यादिव्यवहारस्थले शाखामूलयोः किमप्यवच्छेदकत्वं स्वीक्रियते । इदं चावच्छेदकत्वं सप्तम्यन्तबोध्यं पूर्वोक्ताद्विलक्षणमेव ।

संबन्धास्तावद्बहुधा भवन्ति । संयोगः, समवायः इ-

त्यादिकं साक्षात्संबन्ध इत्युच्यते । संयुक्तसमवायः, समाना-धिकरण्यमित्यादिकं परम्परासंबन्ध इति कथ्यते । संयोगा-दीनां पदार्थाधिकरणत्वप्रतीतौ कारणत्वमस्ति । संयोगेन घ-टसत्त्वे घटवद्भूतलमिति प्रतीतिजननात् । एवमाधारत्वप्रती-तिहेतवः संबन्धा वृत्तिनियामका इत्युच्यन्ते । तदहेतवस्तु ज-न्यजनकभावादयः संबन्धा वृत्त्यनियामका भवन्ति । वृत्त्य-नियामकस्य संबन्धस्याभावप्रतियोगितावच्छेदकत्वं नास्तीत्येके वदन्ति । तन्मते जनकतासंबन्धावच्छिन्नघटाभावस्तन्तौ विद्यते इति व्यवहारो न प्रामाणिकः । जनकतासंबन्धाव-च्छिन्नघटाभावस्थाने घटजनकत्वाभावमेव ते स्वीकुर्वन्ति ॥

येन संबन्धेन प्रतियोगी न कुत्रापि वर्तते तादृश-संबन्धस्य प्रतियोगितावच्छेदकत्वे व्यधिकरणसंबन्धावच्छिन्ना-भाव इति व्यवहारः । संयोगेन गुणस्याभावः, समवायेन परमाणोरभावः इत्यादिकं तदुदाहरणम् । न हि संयोगेन गुणः, समवायेन परमाणुर्वा कुत्रचिद्वर्तते । तथा च ता-दृशाभावस्य सर्वत्र विद्यमानतया केवलान्वयित्वं वदन्तीति संक्षेपः ॥

---

## (३२) निर्वचनसरणिः ।

---

तार्किकाः पदार्थनिर्वचने लक्षणनिर्वचने च महत्पा-

टवं प्रदर्शयन्ति । तेषां निर्वचनस्य पद्धतिरपि किंचिदिह निबध्यते ॥

वस्तूनां विभजनं नाम किमिति सर्वेषां यथाश्रुतग्राहिणामपि ज्ञातमेव । द्रव्यगुणकर्मसामान्यविशेषसमवायाभावा: सप्त पदार्था:, पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि द्रव्याणि इत्यादिकं विभजनमिति सर्वे जानन्ति । तथापि 'विभजनं' निर्दुष्टमिति वक्तुं के के अंशा अपेक्ष्यन्ते? 'विभजनं' नाम किम्? इति प्रश्नस्योत्तरं दातुं तार्किका एव शक्नुवन्ति ॥

विभजनं नाम सामान्यधर्मव्याप्य, परस्परासमानाधिकरण, सर्वधर्मप्रकारकज्ञानजनकशब्दप्रयोग: इति तेषां निर्वचनम् । सामान्यधर्मापेक्षया न्यूनवृत्तय:, परस्परं व्यधिकरणाश्च यावन्तो विद्यन्ते धर्मास्तावतां बोधाय प्रयुज्यमानं वाक्यमेव विभजनं भवति । पदार्थानां विभागे पदार्थत्वं सामान्यधर्म:, द्रव्यत्वगुणत्वादय: तद्व्याप्यधर्मा:, ते च परस्परं भिन्नाधिकरणा:, सप्तैव च तादृशधर्मा विद्यन्त इति तावतां बोधकं वाक्यं विभजनं भवति । नाधिकं न वा न्यूनम् । द्रव्याणां विभागे द्रव्यत्वं सामान्यधर्म:, पृथिवीत्वादिका व्याप्यधर्माश्च भवन्ति ॥

अथ लक्षणनिर्वचनम् । गन्धवत्त्वं पृथिव्या लक्षणम् । तच्च समवायसंबन्धेनेति वक्तव्यम् । अन्यथा कालस्य कालिकसंबन्धेन

सर्वाधारतया तत्रातिव्याप्तिः स्यात् । समवायेन गन्धवत्त्वमपि कुत्राचिन्न संघटते । उत्पत्तिद्वितीयक्षण एव यो घटो विनश्यति तत्र गुणानुत्पत्त्या गन्धस्याभावात् । अतः गन्धसमानाधिकरणजातिमत्त्वं पृथिव्या लक्षणमिति कल्प्यते । गन्धसमानाधिकरणा पृथिवीत्वजातिरुत्पन्नविनष्टेऽपि वर्तत एव । एवमपि गन्धसमानाधिकरणां द्रव्यत्वजातिमादाय जलेऽतिव्याप्तिः । अतो जातौ द्रव्यत्वव्याप्यत्वं— द्रव्यत्वन्यूनवृत्तित्वं— विशेषणं देयम् । न हि स्वस्य स्वापेक्षया न्यूनवृत्तित्वमिति स दोषः परिहृतः । तथा च गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणं पर्यवस्यति । एवं बहुमुखानि निर्वचनरत्नानि तार्किकग्रन्थखनिभ्यः स्वयं निखन्य गृह्यन्तामिति संसूचिता सरणिः ॥

भूरिप्रबन्धाध्ययनेन शास्त्र-<br>
सारं ग्रहीतुं स्वयमक्षमाणाम् ।<br>
सुखावबोधाय विनिर्मितोऽय-<br>
मनन्तनारायणशास्त्रिणैवम् ॥

लौकिकानां सतामेतद्यदि स्यादुपकारकम् ।<br>
तावता सैष धन्योऽस्मि किमाशास्यमतः परम् ॥